नैकोऽपि शेषस्तेषां शून्यकाल इति "उवट्टेइक्कमिवि तामीसो धरन्ति जाव एक्कोवि, विणिल्लेवितेहिं सव्वेहिं वट्टमाणेहिं सुन्नो उ" इदं च नारकसंसारावस्थानकालचिन्तासूत्रं न नारकभवमात्राङ्गीकरणेनैव प्रवृत्तं कुत एतद् ( अवेयते ) वेदयते, यतः शून्यकालस्यानन्तगुणता सूत्रोक्ता वाऽत्र च गाथाः—

एतं पुण ते जीवे, पडुच्च सुत्तं ण तब्भवं चेव । जइ होज्ज तब्भवंतो, अणंतकालो ण संभवति ॥
किंकारणमातिट्ठा, णेरइया जे इमंमि समयंमि । ते ठितिकालस्संतो, जम्हा सव्वेसु विज्जंति ॥
थोवो असुन्नकालो, ते उक्कोसेण वारसुमुत्ता । तत्तो य अणंतगुणो, मीसो णिल्लेवणा कालो ॥
आगमणगमणकालो, तसातितरमिम्मितो अणंतगुणो । अह णिल्लेवणकालो सो पुणपायं वणस्सतिगयाणं ॥

एयं चेव य णारगभवंतरं देसियं जेट्ठं एवं णरामराण वि तिरियाणं णवरं णत्थि सुणद्धाजं णिग्गयाण तेसिं भायणमणंततो णत्थि । "जीवे णं भंते अंतकिरियं करेज्जा ।"

अन्त्या चासौ क्रिया च अन्त्यक्रिया—कृत्स्नकर्मक्षयलक्षणा—मोक्षप्राप्तिरित्यर्थः । *"अह भंते ! अस्संजयभवियदव्वदेवाणमित्यादि" असंजतो*—मिथ्यादर्शनसहचरितः सामस्त्येनानिवृत्तः प्राणातिपातादिषु कष्टतपश्चरणभावनाभ्यासाद्विजिक्षितकर्मांशः देवत्वोपपत्तिं प्रति भव्यो योग्यः द्रव्यदेव इति यावद् देवत्वपर्यायं नानुभवति तावदसौ द्रव्यदेवो देवभावशून्यत्वात् । द्रव्यशब्दश्च कारणत्वप्रकाशनद्वारेणोपात्तः तदेव हि जीवद्रव्यमङ्गीकृत्य सुरजन्मपर्यायं मनुष्यजन्म-

स्थितपरिक्षयेऽनन्तरजन्मनि देवतयोत्पत्स्यत इति नान्यद् देवजन्मनः कारणमतोऽसंयतश्चासौ भव्यद्रव्यदेवश्चा-संयतद्रव्यदेवः स च मृत्वा जघन्येन भवनवासिषूत्कर्षेणोपरितनग्रैवेयकेषु उत्पद्यत इति ।

नन्विदमयुक्तं यतः–"तिरियमेवंविधा गैवेज्जसुणमुक्काउववातो अभ ( दव्व ? ) लिंगेणेति" तदेतत् कथम् ? अत्रोच्यते–एवमेवैतद्यथा विरोधो न भवति तथा श्रूयताम्—तस्या हि महामिथ्यादर्शनमोहप्रादुर्भावे सत्यपि चक्रवर्तिप्रभृत्य-नेकभूपतिप्रवरपूजा–सत्कार–सन्मानदानात् साधूनवेक्ष्य तदर्थं प्रव्रज्याक्रियाकलापानुष्ठानं प्राप्नोतीत्यविरोधः ।

नन्वेवमपि पौनरुक्त्यं लक्ष्यते यतः सूत्रान्ते वक्ष्यति—"*सलिंगीणं दंसणवावण्णाणमिति*" उच्यते—योग्यं सूत्रा-दावुपन्यस्तो जन्मप्रभृत्यामरणान्मिथ्यादर्शनग्रहणविजृम्भणायासितमतिः सर्वदा, पाश्चात्यस्तु प्रव्रज्याकाले सम्यग्दर्शन-युक्त एव क्रियानुष्ठानं प्रति प्रवर्त्तते उत्तरकालं तु दर्शनमोहोदयवशाद्भगवदर्हत्प्रणीतपदार्थविषयं श्रद्धानमपेतमित्यतो न पुनरुक्त(ते)ति ।

'*अविराहियसंजमाणं*' संयमस्य दशभेदः तस्य विराधना–वितथाचरणं–खंडनं–विनाश इति वा स अविरा-धितो यैस्ते अविराधितसंयमाः साधवः इतरे तद्विपरीताः संज्ञा–मनस्तदस्ति येषां ते संज्ञिनः, असंज्ञिनः–मनोलब्धि-रहिताः,तापसाः–बालतपोविधानभाजः कन्दमूलफलाशिनोऽरण्यनिवासिनश्च, कन्दर्प्पः-परिहासः स येषामस्ति कन्दर्प्पिकाः कन्दर्पेण वा चरन्ति इति कान्दर्पिकाः–चरकाः कच्छोटकादयः, परिव्राजकास्तु कपिलमुनिसूनवः, किल्बिषं–पापं तदस्ति

येषां ते किल्बिषिकाः—पापिनः कल्पभाष्यादवगन्तव्याः, तिर्यञ्चः पंचेन्द्रिया ये आजीविकाः नाग्न्यधारिणो गोशाल-[क] शिष्याः, अभियुञ्जन्ति ये परान् विद्यामन्त्रचूर्णयोगप्रभृतिभिस्ते आभियोगिकाः, स्वलिंगं—साधुलिङ्गं रजोहरण-मुखवस्त्रिकादि तत्सम्बन्धिनस्तल्लिङ्गिनः परिभ्रष्टसम्यग्दृष्टयः ।

'कतिविहे णं भंते असन्नियाउए पन्नते इत्यादि णेरतिय सन्नियाउए' असंज्ञिनो हि जीवाः पापमुपचित्य प्रथमां पृथिवीं प्रयान्ति तत्रासंज्ञिसता नारकभवयोग्यमायुर्बद्धं यत्तदेवासंज्ञिनारकायुरुच्यते, इतरथा हि नारकाः सर्वे एव पर्याप्तियुक्ता भवन्ति न कश्चिन्मनोविरहितोऽस्ति इत्येवमितरत्रापि योज्यम् ।

## ॥ प्रथम शतके द्वितीयोद्देशः ॥

## ॥ अथ प्रथमशतके तृतीयोद्देशः ॥

देशेन यदा हस्तादिना वेदितव्यस्यार्थस्य देशं मोहयति, देशेन हस्तादिना सर्वमेवार्थं मोहयति, सर्वात्मना वा देशमर्थस्य, सर्वात्मना वा सर्वमर्थम् आह सर्वात्मना सर्वं कृतमित्येष इष्टः, नशेषाः । भेदसमापन्ना—द्वैधीभावमापन्नाः एवमिदं न त्वैवमिति खलु समापन्ना नैतदेवमिति 'एवमवधारणे' एवं मनो धारयत् प्रकर्षेण यथैतत्सत्यमिति एवं प्रकुर्वन्मनः यथा भगवद्वचनं सत्यमिति एवं च चिन्तयन्नान्यमतानि सत्यानीति एवं च संवरयन्मनोऽन्यमतेभ्यः ।

'से णूणं भंते ! *अत्थित्ते अत्थित्तं परिणमयति*' यथा—अङ्गुलेरस्तित्वमङ्गुलीभावेन नास्तित्वमङ्गुष्ठभावेन, अङ्गुष्ठस्यास्तित्वमङ्गुष्ठभावेन नास्तित्वमङ्गुलीभावेन, एवमेतदस्तित्वे परिणमते गमनीयं (प्रज्ञापनीयम्), एवमवस्थिता जैनीप्रक्रिया यदुताऽस्तित्वमस्तित्वेन वर्त्तते । *"जीवे णं भंते ! पमायं किं पच्चइयं"* इत्यादि प्रमादोऽसौ किं प्रभवः ? आह—योगप्रभवः योगःशरीरप्रभवः, एवं नेया उत्थानादौ तरतमयोगकथितः । उदीर्णं नोदीरयति पूर्वोदीर्णत्वात् । अनुदीर्णमपि नोदीरयति अनुदीरणाभावित्वात् । अनुदीर्णं यदुदीरणाभावि च तदुदीरयति, न च उदीर्णस्य सतो योऽनन्तरसमयः तेन यत्पश्चात्कृतं कर्म गतत्वादुदीरयति, तदप्युत्थानादिभिरुदीरयति । उदीर्णस्योपशमनं नास्ति कर्म्मण उदीर्णत्वात् । तस्मादनुदीर्णं कर्मोपशमयति । '*वेदेति*' उदीर्णं सत्कर्म वेद्यते अनुदीर्णस्य वेद एव नास्ति । '*णिज्जरइ*' उदीर्णस्य सतो योऽनन्तरसमयस्तस्मिन् यद्वर्त्तते कर्म तन्निर्ज्जरयति शेषेषु निर्जरणं नास्ति ।

**तइएणं उदीरेंति, उवसामेंति य पुणो वि बीएणं । वेइंति निज्जरेंति य, पढमचउत्थेहिं सव्वेवि ॥१॥**

'*पुढविकाइयाणं तक्काइ वा*' 'उह' वितर्कें उहेहापोहा प्राज्ञबुद्धयो न सन्ति '*अत्थि णं भंते ! समणावीत्यादि*' 'णाणंतरेहिं' अन्यतीर्थकरमतानि दृष्ट्वा लिङ्गन्तरं नाग्न्यादिस्वप्रवचने किञ्चिद्भेदान्तरं दृष्ट्वा प्रावचनकल्पं तीर्थकरकल्पं पुरुषं दृष्ट्वा वेदयतीति ।

## ॥ प्रथमशतके तृतीयोद्देशः ॥

## ॥ अथ प्रथमशतके चतुर्थोद्देशः ॥

*'जीवे णं भंते ! बालवीरिय'* इत्यादि बालो—मिथ्यादृष्टिः, पण्डितः—साधुः, बालपण्डितः—श्रावकः मोहनीयेन कृतेन कर्मणा उदीर्णेन 'उवट्ठाएज्जा ( अवकम्मेज्ज ) आपज्जत'इति यदुक्तं भवति आह—

मिथ्यादृष्टिर्यो यतिः एतदुपस्थानशब्देनोच्यते, *अवकम्मेज्जा*—सम्यग्दृष्टिः मोहनीयकर्मोदयादपक्रान्तः, मिथ्यादृष्टिर्वा भवति श्रावको वा ( मोहो ) दयेन पण्डिताद्बालपण्डितं यावत् श्रावकत्वमित्यर्थः । मोहोदयेन बालपण्डितात्—श्रावकत्वाद् बालत्वं यायादित्यर्थः । *'उवसंतेण ( न अव ) कम्मेज्जा'* उपशान्तेन सता न मिथ्यादृष्टिर्जायते, साधुः श्रावको वा भवति । *'अवकम्मेज्जा'*उपशान्तेनापक्रान्ताः स्थानान्तरं मिथ्यादृष्टिर्गच्छति न साधुत्वं श्रावकत्वं प्रयाति । *"से भंते किमाताए अवक्कमतीत्यादि"*—आत्मना अवक्रामति, पूर्वं पण्डिते रुचिः पश्चान्मिश्रप्रदेशकर्माणः ये जीवप्रदेशास्ते कर्मणा ओतप्रोता एतत्प्रदेशतया गृहीतमिति । अनुभागकर्म खण्डशः कृतमेतदेव भुज्यमानमनुभवरूपमिति । अनुभागं तथाभागं वेदयति वा न वा प्रदेशकृतं नियमाद्वेदयति । यथा यथा कोद्रवा वर्षं भुक्तकायदत्ताः अग्निकेन व्याधिना मासकेन भुक्ताः । कोद्रवा न तु तथाभावं अन्तो न तु भावस्तथा चान्यथा च प्रदेशबद्धमनुनियमाद्वेद्यमनुभावबद्धं नारकं तिर्यक्ष्वपि वेदययायुरन्यत्र वा ज्ञातमेव तद्भागवता ज्ञातमिति । भवयुद्धं सुस्मृतं विज्ञातं—विविधं ज्ञातं यथा इदं कर्म अस्य जीवस्य अभ्युपगम्य केशलोचब्रह्मचर्यादिभिर्वेदायिष्यते, इदं पुनः ज्वरातिसारादिवदुपक्रमेण वेदयिष्यते

'अहाकम्मं'—यथा कर्मबद्धं तथा वेदयिष्यति पूर्वकाले परमाण्वादि भुवि अभूदित्यस्यार्थे 'छउमत्थेणं' केवलसमस्तेन संयमेन एवं ज्ञेयः नहि छद्मस्थस्य सतः सिद्धिर्भवति । अनुत्पन्ने केवलज्ञाने 'आहोहिए' परिमितक्षेत्रविषयोऽवधिर्यस्य । 'परमाहोहिए' 'अलोए लोए लोयपमाणमत्ताइं खंदाइं जाणति जस्स ओही' 'अलमत्थुत्ति' अलमस्त्विति—पर्याप्तमस्तु इति, नातः परं किञ्चिद् ज्ञानान्तरं प्राप्यमस्ति ।

## ॥ प्रथमशते चतुर्थोद्देशः ॥

## ॥ अथ पञ्चमोद्देशकः ॥

तीसाय पण्णवीसा, पन्नरस दसेव या सयसहस्सा । तिन्नेगं पंचूणं, पंचेव अणुत्तरा निरया ॥१॥
चउसट्ठी असुराणं, चउरासीई य होइ नागाणं । बावत्तरी सुवन्नाण, वाउकुमाराण छण्णवई ॥२॥
दीव-दिसा-उदहीणं, विज्जुकुमारिंदथणियमग्गीणं । छण्हंपि जुवलयाणं, छावत्तरिओ सयसहस्सा ॥३॥
बत्तीस अट्ठावीसा, बारस अट्ठ चउरो सयसहस्सा । पण्णा चत्तालीसा, छच्चसहस्सा सहस्सारे ॥४॥
आणयपाणयकप्पे, चत्तारिसयाऽऽरणच्चुए तिण्णि । सत्त विमाणसयाइं, चउसु वि एएसु कप्पेसु ॥५॥
एक्कारसुत्तरं हेट्ठिमेसु, सत्तुत्तरं सयं च मज्झिमए । सयमेगं उवरिमए, पंचेव अणुत्तरविमाणा ॥६॥

*'इमी से णं भंते ! रयणप्पभाए केवतिया ट्ठिईट्ठाणा पण्णत्ता'* ! इत्यादि स्थितेः स्थानं स्थितिस्थानं स्थितिविभागाः कियन्त ? आह—असङ्ख्येयाः–एकद्वित्रिकादिसमयाधिका जघन्यतः उपरिष्टात् स्थापना चेयम्—१००००१२३४ एवमेकादिसमयप्रक्षेपेण यावदसङ्ख्येयसमयाधिकाः यावच्च रत्नप्रभापृथिवीप्रयोग्या उत्कृष्टा स्थितिरेकसागरोपमा जातेति । दशवर्षसहस्रस्थितयो ये नारकाः ते किं क्रोधोपयुक्ताः ? इत्यदि प्रश्नः–इयं च लक्षणगाथा सर्वत्र योज्या–

**संभवइ जहिं विरहो, असीई भंगा तहिं करेज्जाहि। जहियं न होइ विरहो, अभंगयं सत्तवीसा वा ॥१॥**

अत्र जघन्यस्थितयः प्रायसः सर्वे नारकाः क्रोधोपयुक्ताः—क्रोधप्रचुराः अतोऽभिधीयते *'सव्वे वि ताव होज्जा कोहोवयुत्ता'* इत्येको भङ्गः । इदानीं द्विकसंयोगेन क्रोधममुञ्चता बहुवचनान्तं षड्भङ्गाः कार्याः—कश्चिदेकः समुत्पस्या मानोपयुक्तः तस्मादभिधीयते–'कोहोवयुत्ता [य] माणोवयुत्ते य'१ कोहोवउत्ता माणोवउत्ता य । इयमप्यवस्था विद्यते-यदुत सर्वे क्रोधप्रचुरा मानप्रचुराश्च २ । एवं मायैकत्वेन बहुत्वेन च द्वौ बहुवचनान्तं क्रोधममुञ्चता कार्यौ २ । एवं लोभैकत्वेन बहुत्वेन द्वौ बहुवचनान्तं क्रोधममुञ्चता २ । एवं सर्वेऽपि षट् द्विकसंयोगेन लब्धाः ६ । इदानीं त्रिकभङ्गाः त्रिकभङ्गे च द्वादश लभ्यते—क्रोधे नित्यं बहुवचनं मानमाययोरेकवचनमेको भङ्गः १, मायाबहुवचनेन द्वितीयः माने बहुवचनं मायायामेकवचनं तृतीयः ३, पुनर्मायायां बहुवचनं चतुर्थः४, पुनः क्रोधमानलोभैरनेनैव विचारणाभिधानेन चत्वारः ४, पुनः क्रोधमायालोभैश्चत्वारः ४ एवमेते द्वादश १२ । चतुष्कसंयोगेनाष्टौ लभ्यन्ते तथाहि—

क्रोधमानमायालोभेषु सर्वत्र बहुवचनेनैकः १, क्रोधादिषु बहुवचनमेव लोभे त्वेकवचनं द्वितीयः २, क्रोधमानयोर्बहुवचनमेव मायायामेकवचनं लोभे च बहुवचनं तृतीयः ३, पुनर्मायालोभयोरेकवचनमितरयोर्बहुवचनं चतुर्थः ४, माने त्वेकवचनं शेषेषु बहुवचनमिति पञ्चमः ५, मानलोभयोरेकवचनमितरयोर्बहुवचनमिति षष्ठः ६, मानमाययोरेकवचनमितरयोर्बहुवचनमिति सप्तमः ७, क्रोधे बहुवचनमितरेषु त्वेकवचनमिति अष्टमः ८, एवमेते जघन्यस्थितिस्थायिषु नारकेषु सप्तविंशतिर्भङ्गका लब्धाः—८-१२-६-१=२७ । एतस्यां च जघन्यस्थितौ बहवो नारका सन्ति, तेन क्रोधे बहुवचनं नियमात् ।

इदानीं ये नारकाः जघन्यायां स्थितौ समयाधिकायां वर्त्तमानाश्चिन्त्यन्ते यदुक्तं भवति—दशसु वर्षसहस्रेषु समयाधिकेषु वर्त्तमानाः नारकाः कीदृग्विधाः ? इति प्रश्नः, अत्राह—

एवंविधस्थितौ अशीतिभङ्गकभाजो भवन्ति । कथं पुनरत्राशीतिः ? आह—प्रायसो नारका न दशवर्षसहस्रस्थितावुत्पद्यन्ते, समयाधिकायां तूत्पत्त्या यावत् सङ्ख्येयसमयाधिकायाम् तेनाल्पत्वात्तेषां क्रोधमानमायालोभप्रचुरोऽपि भवेदेकः कश्चिदेकसंभवाच्चाशीतिभङ्गसंभवोऽस्ति, तस्मादशीतिः । अत्र कथं पुनरशीतिः संभवति ? तत्प्रदर्श्यते—सर्वेऽपि तावत्क्रोधोपयुक्ताः सर्वत्र बहुवचनेन चत्वारः ४, पुनरेकवचनेन चत्वारः ४, एतेऽष्टौ। द्विकसंयोगेन चतुर्विंशतिर्लभ्यन्ते, एकवचनबहुवचनाभ्यां क्रोधमानयोश्चतुर्भङ्गी, क्रोधमाययोश्चतुर्भङ्गी, क्रोधलोभयोश्चतुर्भङ्गी

एते द्वादश १२ । ततः पुनरपि मानमाययोश्चतुर्भङ्गी, मानलोभयोश्चतुर्भङ्गी, मायालोभयोश्चतुर्भङ्गी, १२ । सर्वत्रैकवचनबहुवचने योज्याः एवमेते चतुर्विंशतिर्भङ्गाः २४ ।

इदानीं त्रिकसंयोगा द्वात्रिंशत्प्रदर्श्यन्ते—क्रोधमानमायाभिरष्टभङ्गी८, क्रोधमानलोभैरष्टभङ्गी८, क्रोधमायालोभैरष्टभङ्गी८, पुनर्मानमायालोभैरष्टभङ्गी८, एवमेते द्वात्रिंशद्भङ्गकाः त्रिकसंयोगे ३२ ।

इदानीं चतुष्कसंयोगे क्रोधमानमायालोभैरेकवचनबहुवचनाभ्यां षोडशभङ्गी भवति १६ । एवमेते त्वेकत्रीकृताः सर्वेऽपि अशीतिर्भङ्गा भवन्ति । असङ्ख्येयसमयाधिकायां बहव उत्पद्यन्ते, तथा च *तप्पाउग्गुक्कोसियाए'* तन्नारकप्रायोग्या च या उत्कृष्टस्थितिः यथा रत्नप्रभायां सागरोपमं तस्यां बहव उत्पद्यन्ते, प्रायसश्च बहवःक्रोधप्रचुराः तस्मात् सप्तविंशतिर्भङ्गसंभवः ।

इदा*नीमवगाहना* चिन्त्यते—*'केवइया ओगाहणट्ठाणा पण्णत्ता'* अवगाहना—शरीरस्य जघन्याङ्गुलासङ्ख्येयभागमात्रा, एतस्याः सकाशादन्यः प्रदेशातिरिक्तायामवगाढः, ततोऽपि द्वित्र्यादिप्रदेशवृद्ध्या यावत् सङ्ख्येयप्रदेशातिरिक्तायामवगाढं जघन्यावगाहनायां च नारकाः स्तोकास्ते सङ्ख्येयप्रदेशातिरिक्तावगाहनानारकास्तेन तेषामल्पत्वात् कदाचित्क्रोधोपयुक्तोऽपि लभ्यते एकः । के ( चित् ) मानमायालोभप्रचुराश्चातोऽशीतिः । असङ्ख्येयप्रदेशावगाहनायामुत्कृष्टावगाहनायां च बहवो नारकाः, प्रायसश्च ते क्रोधोपयुक्तास्तेन बहुत्वात्क्रोधप्रचुराणां सप्तविंशतिर्भङ्गाः ।

शरीराणि त्रीण्येव तेषाम्, सर्वे एवैतेषु शरीरेषु वर्त्तन्ते । बाहुल्यात्क्रोधोपयुक्ता बहवस्तेन सप्तविंशतिः । शरीरत्रिके सर्वे एवासंहननाः, सर्वत्र क्रोधप्रचुरास्तेन सप्तविंशतिः । सर्वे च हुण्डकसंस्थानाः सर्वग्रहणात्प्राचुर्यम्, तत् प्राचुर्याच्च सप्तविंशतिः । कापोतलेश्याः सर्वे एव, सर्वग्रहणात् प्राचुर्यं प्राचुर्यात्सप्तविंशतिः । बहवः सम्यग्दृष्टयो नारका मिथ्यादृष्टयश्च, बहुत्वाच्च क्रोधप्राचुर्याच्च सप्तविंशतिः । सम्यग्मिथ्यात्वेऽल्पास्तेनैकोऽपि संभवति, अतोऽशीतिः । अज्ञानिनो ज्ञानिश्च बहवः, बहुत्वात्तथैव सप्तविंशतिः । उपयोगे च सर्वे एव, अतोऽशीतिः एवं तावन्नारकाणां क्रोधबाहुल्यात्क्रोधे बहुवचनप्रयोगः ।

देवानां तु लोभबाहुल्यात् लोभे बहुवचनं प्रयोक्तव्यम्, भवनवासिनो प्रायो लोभप्रचुरत्वात् सर्वेऽपि तावद्भवेयुर्लोभोपयुक्ताः शेषं नारकाणामिवानुसर्त्तव्यमिति ।

*'पृथिवीकायिकाः'*—सर्वे एव क्रोधमानमायालोभप्रचुरास्तेनाऽभङ्गकम्, तेजोलेश्यायामशीतिः संभवेत्, कथम् ? कश्चिद्देवो देवलोकात्प्रच्युत्य तत्रोत्पद्यत एकः, एकसंभवाच्चाशीतिः । *' बितिचउरिंदियाणं जं जत्थ सत्तावीसं तत्थ अभंगकं '* कथम् ! सर्वे एव क्रोधमानमायालोभप्रचुरास्तेन एक एव भङ्गः । यत्राशीतिस्तत्राप्यभङ्गकमाभिनिबोधिक-श्रुतज्ञाने विनिर्मुच्य, कस्मात् ? एतद्विज्ञानेषु एकेषां स्तोकत्वाद्विद्यते कश्चित्, क्रोधमानमायालोभप्रचुरास्ते तस्मादशीतिः । *' पंचेंदिया तिरिया'* सर्वे एव क्रोधमानमायालोभप्रचुरास्तेन यत्र सप्तविंशतिस्तत्राभङ्गकम्, यत्राशीतिः तत्राशीतिरेव, अत्रापि तेऽल्पा एव, अल्पत्वाच्चाशीतिसंभवः ।

मनुष्याणामप्यल्पत्वादेव यत्र सप्तविंशतिस्तत्राभङ्गकम् 'णवरं–दोण्हवि पच्छिमेसु आलावएसु अभंगकं, केवलणाणोवयोगे केवलि मुत्तु लेसाए य' जघन्यस्थितिः । जघन्यस्थितिकः यो मनुष्यः आहारकशरीरे च वर्त्तते, सोऽल्पस्तेनाल्पत्वादशीतिः सम्यग्मिथ्यात्वे चेति । शेषेषु अशीतिभंगकसंभवाभाव इति ।

॥ प्रथमशतके पञ्चमोद्देशः समाप्तः ॥

॥ अथ षष्ठोद्देशकः ॥

"से णूणं भंते ! सव्वंति सव्वावंति" इत्यादि–सर्वतः सर्वात्मना सर्वापत्तिः सर्वदिक्षु यत् क्षेत्रं तत्सर्वं व्याप्याऽवभासते–ईषल्लक्ष्यते तदवभासनमाहुः । उद्योतयति भृशं यत्र पिपीलिकादि दृश्यते तत्तापयतीत्युच्यते, अतितापयुक्तः प्रकाशयतीत्युच्यते, उदकान्तः तत्तपतेऽतिस्पृशति, पोतौ नौ तस्यान्तः पोतान्तः, छिद्रं तस्यान्तं वस्त्रस्य दूष्यान्तं स्पृशति, छायान्तः आतपान्तम् । पूर्वपश्चादित्येवं प्रविभागो यत्र नास्ति, तदनानुपूर्वीशब्देनोच्यते । उपरि सितं बध्नाति–बध्नं बध्नाति, 'षिञ्' बन्धने, 'पुण्णो पुणयमाणा' पूर्णा भृताः पूर्वप्रमाणास्तेन प्रमाणेन 'वोलट्टमाणाए' एवं भृता येनान्यत्पानीयं छद्यन्ते, 'वोसट्टमाणी' भृता संती यत्र नैव निमज्जति, समभरघटवत् या आधस्त्योदकेन सह तिष्ठति ।

॥ इति प्रथमशतके षष्ठोद्देशः ॥

## ॥ अथ सप्तमोद्देशः ॥

*"नेरइया णं भंते ! नेरइएसु"* सूत्रं–किमत्रावस्थित एव जीवाः एकं देशमपनीय तत्र देशेनोत्पद्यते, यत्रोत्पत्तव्यम् । अथवा देशेन यत्रोत्पत्तव्यं तत्र सर्वत्रोत्पद्यन्ते, सर्वेण वा शरीरेण तत्र देशेनोत्पद्यते, सर्वेण वा शरीरेण इलिकागतौ देशेनोत्पद्यते कन्दुकगतौ वा । सर्वेण सर्वत्रोत्पद्यते, विमुच्यैव पूर्वस्थानम् । आहारकसूत्रे अपूपवत् सर्वेण वा देशं सर्वेण वा सर्वमाहारयन्ति । *'जीवे णं भंते !'* कश्चिद् विग्रहागतिर्भवति । विग्रहः—कुटिलं–विश्रेणिरिति पर्यायाः । अविग्रहः ऋजु अकुटिलं कश्चिदविग्रहगतिर्भवति । *'ते ण सिय विग्गहगतीत्यादि'* भाव्यम् । एकेन्द्रियवर्जितजीवाः सर्वे लोकनाडी-प्रविष्टाः प्रायसः तेषामविग्रहा गतिः कथंचिद्भवति । तत एकोऽनेको वा तस्माद्भङ्गत्रयम्, एकेन्द्रियाः पुनर्बहि-रप्युत्पद्यन्ते तस्मात्तेषां विग्रहो गतिः ।

'देवे णं भंते ! *अविउक्कंतियं च यमि'त्यादि*–अव्युत्क्रान्तकाले–च्यवनसमये, अव्युत्क्रान्तपूर्वस्थानात् पश्यत्युत्पत्ति-मात्मनोऽमुस्मिन् स्थानेऽहमुत्पत्स्ये, दृष्ट्वा च कथंचित्कालं नृनिमित्तमहमेतदाहरिष्यामीति, अतो महत्या सद्वृत्त्या परिगतमनसोऽसौ नाहारमाहारयति ।

अथ पुनराहारयते आह्रियमाणः आहृतः स्यात्, प्रहीणायुर्यत्रोत्पद्यते, तद्भवायुर्वेदयति । आमं गौतम ! आहत्य कदाचिदाहारयति मातृजीवस्य या रसहरणी नाडिः पुत्रजीवस्य च या, सा पुत्रजीवप्रतिबद्धा पुत्रजीवं

स्पृष्टवती एवं पुत्रप्रतिबद्धा मातृकं स्पृष्टा तया, चिनोति शरीरं पित्रावयवनिष्पन्नानि–अस्थीनि, तन्मध्ये अस्थिमज्जा-मेदपिच्छिकादिशेषमस्तुलिङ्गं मातृपितृसत्कं पुद्गलपरिणामः, पुनःपुनर्ध्वस्यत एवान्ते सर्वथाऽपैति स संज्ञिपंचेन्द्रियः, शेषः गर्भस्थः अन्तर्मुहूर्त्तमात्रेण गर्भे एव पर्याप्तीभूतः आम्रकुब्जः वक्रफलकवत् वर्णवर्धकानि श्लाघायशोवर्धकानीति ।

## ॥ इति प्रथमशतके सप्तमोद्देशः ॥



## ॥ प्रथमशतके अष्टमोद्देशः ॥

*'एगंतबाले णं भंते !'* सूत्रं–एकान्तबालो मिथ्यादृष्टिरविरतो वा, एकान्तपण्डितः सम्यक्त्वसप्तके क्षपिते न बध्नात्यायुः परतः आराद्यः साधुः स बध्नाति, तस्मात्सा बध्नाति स्यान्न । *'पुरिसे णं भंते ! कच्छंसि वा'* इत्यादि कच्छः [1]कर्किरेश्वरवत्, ह्रदः परिमण्डलाकारो बहुजलनिचयः, उदकं तु सामान्येन, *'दवियं'*—द्रव्यसमुदायः [2]तृणसस्यादि वृत्ताकाराः नद्याद्युदककुटिलगतिर्विलयम्, *'णूमं'*–अन्धतमसंवनमेकजातीयवृक्षसमुदायः वनविदुर्गं नानावृक्षसमूहः *'गहणं'*–वृक्षवल्लीवितानवीरुत्समुदायः, *'गहनविदुग्गं'*—पर्वतैकदेशावस्थितवृक्षवल्ल्यादिसमुदायः, पर्वतशब्देनैकपर्वतः, पर्वतविदुर्गं–

१ पुना० काकरिश्वरवत् । पु० २. इत्यादि ।

पर्वतसमुदायः, वनम्–एकजातीयवृक्षसमुदायः, *वनविदुर्ग*–नानाविधवृक्षसमुदायः, मृगवृत्तिर्नाम—मृगैर्जीवति लुब्धकादिबद्धस्य सतः परितापः, घातितस्य प्राणातिपातः, ओसवणं उस्सीकरणं उच्छ्रयणं पुना–उस्सवणं उत्रसीकरणं वा, निसृष्टः लग्नो न लग्न इति यावत् मृगपुरुषयोः किमसौ शिरश्छेत्ता ? योऽत्र पृच्छयते—किं मृगवैरेण उत पुरुषवैरेण क्रियमाणं कृतमिति चोक्तम्, निर्वर्त्यमानं निर्वर्त्तितम्, अतः षण्णां मासानां म्रियते सत्त्वस्य भवति प्राणातिपातः परतोऽप्राणातिपातः इति शक्त्या हन्यात् स्वहस्तेन वा विगृह्य कस्यचित् शिरश्छिन्द्यात्, पञ्चक्रिया स्पर्शस्य केनचिच्चासन्नवध एव क्रियते, तत्क्षणमेव मार्यते उत्पत्तिकाले अवीर्याः–प्रयोजनासमर्थाः। लब्धिस्तु विद्यते करणं क्रिया तदभावः।

## ॥ प्रथमशतके अष्टमोद्देशः समाप्तः ॥

## ॥ अथ प्रथमशतके नवमोद्देशः ॥

*'कहणं भंते ! जीवा +गुरुयत्तं हव्वमागच्छंति'*×—गौरवमधस्ताद्गमनं कर्मभिः, हव्वं शीघ्रं, *गच्छंति*–लघुत्वं–ऊर्ध्वयायित्वं कर्मभिरेवाऽकर्मकस्य वा कर्मभिराकुलीकुर्वन्ति–प्रचुरीकुर्वन्तीत्यर्थः। परित्तीकुर्वन्ति स्तोकमिति यावत्।

"णिच्छयओ सव्वगुरुं, सव्वलहुं वा ण विज्जते दव्वं। ववहारओ उ जुज्जइ, बायरखन्धेसु णऽण्णेसु ॥१॥

[ बृहत्कल्पभाष्ये ६५ ]

टी० + पु० गुरुयत्तम्। × एतच्चिह्नितः पाठः पु० संज्ञके नास्ति।

अगुरुलहू चउफासो, अरुवि दव्वाय होंति नायव्वा। सेसा उ अडफासा,[१] गुरुलहुआ णिच्छयणयस्स ॥२॥"

गुरुलघुद्रव्यं रूपि, इतरदरूपि रूपि[२] च तथा च निदर्शनानि–गुरु–लोष्टः, लघुधूमः, तिर्यक्पाती गुरुलघु-वायुः, अगुरुलघु–आकाशम्, पुद्गलाः बादरपरिणताः गुरुलघवः, सूक्ष्मपरिणताः अगुरुलघवः समयादिकालः। द्रव्य-वृत्तिपुद्गलास्तिकायवत्। द्रव्यलेश्यां प्रतीत्य वर्णाद्यो गुरुलघवः। भावलेश्यां[३] प्रतीत्य गुरुलघवः तीतद्धाकाले-ऽप्यूह्यमिति। *'अण्णउत्थियाणं इहभवियाउयमित्यादि'* इह भवायुर्यदा वेदयते तदा जीवः परभवे आयुर्बध्नाति, इहाऽऽयु-रुपभोगे[४] परभवायुष्करोति इति तदेवं यस्माज्जातमात्र एवासौ *'इहभवियाउयं पडिसंवेति'* तदैव तेनायुः परभवयोग्यं बद्धं इति कृत्वा तस्य दानदमाध्ययनादीनां वैयर्थ्यं प्राप्नोति तस्मात्। *'जं समयं इहभवियाउयं णो तं समयं परभवियाउयं, जं समयं परभवियाउयं णो तं समयं इहभवियाउयं'* आत्मनः सामायिकं आत्मैव वा सामायिकस्यार्थः, तथा–'जस्स सामाइयो अप्पा' इत्यादि 'आदाणेत्ति उस्सगस्स अट्ठो' आत्तं यदात्मना कर्म तत्क्षपणार्थं व्युत्सर्गः, यद्येवं तत्किमर्थं–'निंदामि गरिहामि इति करेमि भंते सामाइयं जाव वोसिरामि' कोहे माणे माया लोभे अवहट्टु' परित्यज्य किमर्थं गर्हध्वे काला० सा० संयमार्थः एवमात्मा संयमे उपचितः प्रक्षिप्तो भवति। *'से णूणं भंते! संट्ठियस्स[१] य तणुयस्स य'* इत्यादि तनु–दरिद्रः अथिरं–कर्म्म, थिरो जीवः अतः न स्थिरं प्रलुठति, बालभावो

१ पु० अट्ठ। २ पु० पुस्तके नास्ति। ३ भावः इत्यधिकः। ४ पु० उपभोगेन। टा० १. पु० सिद्धिस्स।

यस्याऽस्ति इति बालकः स च जीवः जीवश्च शाश्वतः बालियत्वं कर्म उत्पद्यतेऽपगच्छति वेत्यशाश्वतम्, पण्डितो जीवः पण्डितत्वं चारित्रमिति । ॥ प्रथमशतके नवमोद्देशः समाप्तः ॥

## ॥ अथ प्रथमशतके दशमोद्देशः ॥

"परतित्थियवत्तव्वय, पढमसते दसयम्मि उद्देसे । विब्भंगीणादेसा, अमेया(?) वा वि सा सव्वा ॥१॥
सब्भूयमसब्भूय, भंगा चत्तारि होंति विब्भंगे । उम्मत्तवायसरिसं, तो अण्णाणं ति णिद्दिट्ठं ॥२॥"

पञ्च परमाणवः एकीभूता दुःखमुत्पादयन्ति । यावन्नोच्यते तावद्भाषाऽभिधीयमाना अभाषा अभिहिता, यावद्भाषासमयोऽतिक्रान्तो भवति तदा भाषा एव, क्रिया यावन्न क्रियते तावद्[१] दुःखमिति गम्यते[२], प्रारब्धायां न विद्यते दुःखंकृतेऽपि, कर्माणि दुःखमिति मन्यते, अक्रियमाणा क्रिया दुःखा अनभ्यस्तत्वात्, सर्वमेतद्विपरीतमेवं द्रष्टव्यमिति ।

॥ प्रथमशतके दशमोद्देशः ॥

॥ प्रथमशतकं परिसमाप्तम् ॥

टी १. पु० न क्रियते । २. पु० न मन्यते ।

## ॥ अथ द्वितीयशतकम् ॥

परस्परस्पृष्टो वायुकायः अपद्रवति *'मडाईणं भंते ! नियट्ठे'* इत्यादि मृतादि-प्रासुकभोजी, एकभवे सिद्धात्सिद्धः शेषोऽपि भवो निरुद्धः, प्रपञ्चो विस्तरः पुनरपीत्यर्थमेकमर्थं शीघ्रं वा इहागच्छति, संसारपारगतः तच्च पारम्परगतः परमपदप्राप्त इत्यर्थः । वैशालिको भगवान् वीरः तस्य श्रावकस्तद्वचनामृतनिरत इत्यर्थः ।

मगधायां जातो मागधः, आक्षेपः-प्रश्नभिन्नचित्तो द्वैधीभावमुपगतः, कलुषचित्तो न एतदेवमिति, अशक्तिकत्वात्, *'कंचनी'*-रुद्राक्षकृता *'करोटी'*-मृद्भाजनम्, *'छण्णालयं'* त्रिकाष्टिका *'केसरीयं'*-चीवरखण्डम्, गौतम ! इति आमन्त्रणम्, *'वीयट्टभोई'*—व्यावृत्ते सूर्ये भुङ्क्ते दिने दिने भुङ्क्ते इति यावत् । द्रव्यतः-एको जीवः सान्तः शरीरमात्र इति यावत्‡ । शोभने श्रामण्ये रतः । *'जीवं जीवे गंति'* जीवितमात्रेण जीवति न शरीरबलेन । 'कडाइ'

---

टी० ‡ शरीराश्रया गुरुलघुपर्यायाः बुभुक्षापरिगतो वलन् म्रियते, वलयमरणेण वसट्ट—इन्द्रियवशगतस्य यन्मरणम्, अन्तः शल्यं द्रव्यभावव्याख्येयं तद्भवः तस्माद्भवात् मनुष्यो मृत्वा पुनरपि मनुष्य एवोत्पत्तेः खड्गादिशकोण पाटनं । 'विहासस' उल्लम्बनमरणम्, क्लेवरान्तःप्रविष्टो गृद्धैर्भक्षापयति यदात्मानं तद्गृध्रबद्धं. निर्हारणोयः प्रतिभये यो म्रियते, अनिर्हारणीयोऽटव्यां तिष्ठति त्यागवान् धन्यः लब्धसंयमवान्, 'अबहिल्लेसो'—निरुद्धबहिर्लेश्यः-निरुद्धबहिःप्रचारः-निरुद्धेन्द्रियवृत्तिरित्यर्थः, इन्द्रियमनोवृत्तयः आत्मकोष्ठोपगताः अन्तर्गता इति यावत् । इत्येषः पाठोऽधिकः पु० पुस्तके दृश्यते ।

कृतयोग्यः ।

## ॥ इति द्वितीयशतके प्रथमोद्देशः ॥

## ॥ अथ द्वितीयशतके पञ्चमोद्देशः ॥

( अत्र द्वितीय-तृतीय-चतुर्थोद्देशाः न सन्ति )

'अण्णउत्थिया णं भंते ! इत्यादि 'देवब्भूएणं अप्पाणेणं(१)' देवत्वे उत्पन्नसमयादात्मानमेव विकृत्यात्मनोपभुङ्क्ते तदा एकजीव एव एकसमयेन वेदद्वयं वेदयते[१] स्त्रीवेदं पुरुषवेदं च ? । उदकगर्भोऽभ्रादिषु । 'कायभवत्थे णं भंते !' इति काये द्वादशवर्षाणि स्थित्वा पुनर्मृत्वा तस्मिन्नेवात्मशरीरे उत्पद्यते इति द्वादशवर्षस्थितिकः एतानि चतुर्विंशतिः केचिदाहुः—

"द्वादशवर्षाणि स्थित्वा पुनस्तत्रैवान्यबीजेन तच्छरीरे उत्पद्यते द्वादशवर्षस्थितिरिति । 'एगजीवे णं भंते !' इत्यादि तिर्यगादिबहूनां बीजं द्वादशमुहूर्त्तं भवति, ततश्च शतपृथक्त्वस्यापि बीजं गवादीनां यथा गौरेव अनेकगोवृषैः समागता तस्मिन् बीजसमुदाये योन्यां प्रविष्टे एक उत्पद्यते जीवः, स च जीवः तेषां सर्वेषामेव पुत्रः । मत्स्यादीनामेकसंयोगे शतसहस्रपृथक्त्वम् । मनुष्ययोनावुत्पन्ना विनश्यन्ति बहवोऽपि । केचित् रुतभृतनाडीकायामअग्निप्रतप्त-करणकक्षेपे सति दाहो भवति, एवं सत्त्वानामपि । 'सत्त्वाश्रयुत्सचित्ता (१) 'संजमे णं भंते (!) किं फलम् ?' अनाश्रवफलः

टी० १ पु० वेदयति । २ पु० मपि ।

संयमः, 'तवो वोदाणफले' उपात्तानां कर्मणां व्यवदानम्, दाप लवने व्युपरमो विनाश इति पर्यायाः पूर्वतपः पूर्वसंयमश्च पूर्वो सरागो सरागकृतेन संयमेन तपसा च देवावाप्तिः, कर्मणा पूर्वेण सङ्गेन वा [1]सज्यमानानां कर्मणां विकारः [2]कार्मिक–विकारात् संगाच्चाह—

"पुव्वतवसंजमा होंति, रागिणो पच्छिमाओ रागस्स । रागो संगो वुत्तो, संगा कम्मं भवोएणं ॥१॥"

सत्योऽयमर्थः न वयमात्मभाववक्तव्यतया अहंमानितया परमार्थ एव त्वेवंविधः—प्रभुप्रभवस्ते शक्ताः सम्यक्कथयितुम्, 'आउज्जिया' आभोगयन्ति जानन्ति, परिसमन्तात् परिभोगयन्ति, श्रवणफला शृणोति यत् श्रुतज्ञानम्, ततो विज्ञानम्, एतत्सत्यं अनाश्रवणात् तपः लघुकर्मत्वात् । राजगृहे महावीरः(?) प्रस्रवणोहृदमघाभिधानः तत्पूरादधिकोऽप्कायः उत्कृष्टः स्पन्दते ।

## ॥ इति द्वितीयशतके पञ्चमोद्देशः ॥

## ॥ अथ द्वितीयशतके दशमोद्देशः ॥

( षष्ठ–सप्तमा–ष्टम–नवमोद्देशाः न सन्ति )

'जीवे णं भंते ! सउट्ठाणे' इत्यादि 'आयभावेणं जीवभावं उवदंसेतीति' आत्मभावेन उत्थानासनशयनगमन-

टी० १ पु० सज्जमानानां । २ पु० कर्म । † पु० पुस्तके न स्त इमे पदे ।

भोजनादिना कार्यसमूहेन जीवमुपदर्शयतीत्यादि ।

॥ इति द्वितीयशतके दशमोद्देशः ॥

॥ द्वितीयशतकं परिसमाप्तम् ॥

॥ अथ तृतीयशतकम् ॥

'से जहा नामए जुवति जुवाणे' इत्यादि । अथ[1] यात्रादिषु युवतिर्यूनो हस्ते लग्ना प्रतिबद्धा[2] घना निश्छिद्रा एवमात्मशरीरप्रतिबद्धैरसुरदेवैर्देवीभिश्च पूरयेत् । शक्तिमात्रव्यावर्णनमेतत्, इतरथा तु नैवंविधा सम्प्राप्तिर्भविष्यति येनैतावन्तीं विक्रियां कुर्यात् । 'पागावहे पव्वजाए' उच्चः—पूज्यः, नीचः—अपूज्यः प्रमाणाद्वा उच्चनीचत्वम् अनित्यजागरा अनित्यचिन्ता पूर्वसङ्गतिका गृहस्थकत्वे पर्यायसंगतिकाः प्रव्रज्याकाले तर्जयन्त्यङ्गुलीभिस्ताडयन्ति समतला 'पव्वाजेंति' काष्ठादिभिः समचतुरंगेमाणा अन्योऽन्यामनुप्रविशति, अन्याच्चान्यमिति ।

॥ इति तृतीयशतके प्रथमोद्देशः ॥

---

टी० १ पु० यथा । २ पु० गच्छति बहुलोकप्रचिते देशे, एवं येऽपि विकुर्विता जीवास्तेऽप्येकस्मिन् कसंरि प्रतिबद्धाः यथा वा चक्रस्य नाभिरेका बहुभिररकैः प्रतिबद्धा अयं पाठोऽधिकः दृश्यते ।

## ॥ अथ तृतीयशतके द्वितीयोद्देशः ॥

अथाऽलघूनि महान्ति वरिष्ठानि गृहीत्वा गच्छन्ति, कार्यं प्रश्नन्ति वैमानिकैः[१] सह कलहं[२] कुर्वन्ति प्रहारैस्तेषां च जघन्येनान्तर्मुहूर्त्तम् उत्कृष्टेन षण्मासत्वधिका वेदना भवति । 'दोवि पाए साहट्टु' संहृत्य आसन्नो कृत्वा 'वग्घारियपाणी'-प्रलम्बितपाणिः मुक्तसङ्ग[३] कृत्वा प्राग्भारः अग्रतो मुखं नतम् यथाप्रणिहितं गात्रं यथास्थितांश्च 'उड्ढं वीससाए ओहेणा आभोएत्ति' ऊर्ध्वं विश्रसास्वभावेन[४] यत्नादवलोकयति । हीनभिन्नचातुर्दश्यादयस्तिथयः । घोरं घोराकारं बृहत्वात् शरीरस्य घोरम्, भीमं-भीमाकारं विकरालत्वात्, भासुरं-भासुररश्मियुक्तं भास्वरत्वाच्च, भयानीकं-अनीकमेव भयं यस्य, अनीकं-स्फुलिङ्गादि- तदनीकं दृष्ट्वैव भयमुत्पद्यते, गम्भीरं—विकीर्णत्वात् अवयवानाम् । 'उत्तासणयं' त्रसी उद्वेगे स्मर्यमाणमप्युत्त्रासं जनयति । 'उच्छोलेति'-( अग्रतोमुखां चपेटां देति ) अग्गतोमुहं चवेडं दलयति [५]पथोलेति पत्थतोमुहं चवेडं देति 'पिहाति' स्पृहयति, तस्सेव[६] 'सालंबहत्थाभरणे'-अधोऽवलम्बमानानि, सव्वथोवे सक्कस्स उड्ढलोयकंडए[७] असंखेज्जगुणे एकसमतिकककंडकं यावत् क्षेत्रं यावता कालेन यावता

---

टी० १ पु० वैनिकैः । २ पु० इदं पदं नास्ति । ३ पु० मुक्तसङ्गं । ४ पु० घमावेन ५ पु० नास्तीदं पदम् । ६ पु० तस्यैव । ७ पु० अहोयकंडए ।

कालेन अधो गच्छति, तदेव क्षेत्रमूर्ध्वं स्तोकेन कालेन गच्छति । तेनाभिधीयते—यावत्[1] क्षेत्रं यावता कालेनोर्ध्वं गच्छति †तावदेव क्षेत्रमधो गच्छति †असङ्ख्येन (?) गुणेन कालेन । 'तेसिं देवाणं अहुणोववण्णाण वा चरिमभवत्थाण वा' अधुनोत्पन्नानां वा प्रच्युतिप्रत्यासन्नानां वा गतिस्तु चरिमस्य (?) स्यात् शीघ्रा, शेषं तथैव भावनीयम् ।

## ॥ इति तृतीयशतके द्वितीयोद्देशश्चरमाख्यः समाप्तः ॥

## ॥ अथ तृतीयशते तृतीयोद्देशः ॥

अनुपरतकायक्रिया[2] गृहस्थादयः, साधवः उपरतकायक्रिया अपि दुष्प्रयुक्तकायक्रियाः ते संयोजना क्षुरिकादेर्मुष्ट्यादिकरणम् , निर्वर्त्तना तु सर्वक्षुरिकादिर्निवृत्तिः । अस्मदादीनां प्रमादप्रत्ययाऽपि अन्येषां त्वप्रमत्तत्वेऽपि योगादिप्रत्यया भवत्येव । *'जीवे णं भंते ! सया समियं'* इत्यादि 'एयति' 'एजृ'—कम्पने विविधमनेकप्रकारमेजते व्येजते । [3]चलति—'चल' कम्पने स्थानान्तरं गच्छति, 'फंदई' अन्यमवकाशं गत्वा पुनस्तत्रैवावगच्छति । 'घट्टई'—सर्वदिक्षु [चलति] ''खुब्भई' क्षोभयति पृथ्वीम्, एवं विशेषव्याख्या सर्वपदानां कार्या, 'आरंभति समारंभति' इत्यादीनां लक्षणम्—

टी० १ पु० नास्त्ययं शब्दः । † एतच्चिह्नान्तर्गतः पाठः पु० पुस्तके नास्ति । २ पु० कृत्या । ३ पु० पुस्तके नास्ति ।

"संकप्पो संरंभो, परितावकरो भवे समारंभो । आरंभो उद्दवओ, सव्वनयाणं विसुद्धाणं ॥१॥"

जीवो न एजते शैलेश्याम्, उद्याति–उपरि उदकस्य तिष्ठति, 'अत्तत्ता संवुडस्स'–आत्मनि आत्मना संवृतस्य यावच्चक्षुषो निमेषोन्मेषमात्राऽपि क्रिया क्रियते तावताऽपि कालेन विमात्रया–स्तोकयाऽपि मात्रया सूक्ष्मा ईर्यापथिका [1]क्रिया क्रियते किं पुनर्वस्त्रादिग्रहणात् सा पिहिया गुप्तवादीर्यावधिकैव 'सव्वाविय णं पमत्तद्धाकालओ' इत्यादि प्रमत्ताप्रमत्तसंयतयोर्देशोनैव[2] पूर्वकोटी येन कालेन[3] प्रमत्तता वा लब्धा तेनोनेति ।

## ॥ इति तृतीयशतके तृतीयोद्देशः समाप्तः ॥

## ॥ अथ तृतीयशतके चतुर्थोद्देशः ॥

"अणगारे णं भंते !" इत्यादि अवधिज्ञानादिऋद्धिप्राप्ताः प्रायेणानगारा भवन्ति, यानरूपेण शिबिकादिना विमानं गच्छति, जाणति ज्ञानेन [उसिओदकं] उसितोदकं गच्छति, उच्छितोर्ध्वं पताकं गच्छति, 'पततोदयं' गच्छति—पतितपताकं गच्छति । ऊर्ध्वपताकस्थापना–पतितपताकस्थापना–एगतो पडागमेवं गच्छति[4] 'जीवेणं भंते जे भविय' इत्यादि यल्लेश्यानि

टी– १ पु० पुस्तके नास्ति । २–पु० परमायुतः परं नास्ति पूर्वकोटी इत्यधिकं वर्त्तते । ३ पु० नास्ति ४ पु० दुहओ पडागमेवं गच्छति इत्यधिकपाठः ।

परिगृह्य भावपरिणामात्मा न म्रियते, यल्लेश्येषु नारकेषूपपद्यत इति एतद्गाथानुसारेण वाच्यम्—

"सव्वाहिं लेसाहिं, पढमे समयंमि परिणयाहिं तु । नो कस्सवि उववाओ, परे भवे अत्थि जीवस्स ॥१॥
सव्वाहिं लेसाहिं, चरमे समयंमि परिणयाहिं तु । नो कस्सवि उववाओ, परे भवे अत्थि जीवस्स ॥२॥
अंतमुहुत्तंमि गए, अंतमुहुत्तंमि सेसए चेव । लेस्साहिं परिणयाहिं, जीवा वच्चंति परलोयं ॥३॥"

मायां भुक्त्वा वमति विरेचनं वा वर्णार्थकं करोति यथा इहैवमनगारो विकुरुते ।

॥ इति तृतीयशतके चतुर्थोद्देशकः समाप्तः ॥

॥ अथ तृतीयशतके पंचमोद्देशः ॥

'असि चम्मपायं गहाय गच्छेजा' इत्यादि असि चर्म्मपात्रं स्फुरकः खड्गादि वा गृहीत्वा यायात् ।

॥ इति तृतीयशतके पञ्चमोद्देशः ॥

॥ अथ तृतीयशते षष्ठोद्देशः ॥

'मायी' मिथ्यादृष्टिरनगारः—अन्यतीर्थिकः वाणारसीं समवहतः राजगृहं पश्यति अन्योपयुक्तो वाणारसीस्थं—

राजगृहदर्शनमुच्यते । एवं द्वितीयसूत्रं तृतीयं पश्यामि न ज्ञानसामर्थ्यात् इति एतावान् विपर्यासः । वाणारस्या दर्शनार्थं समुद्‌घातं कृत्वाऽवधिज्ञानोपयोगं कृत्वा राजगृहस्थानानि रूपाणि पश्यति तथाऽस्थितत्वात् ।

॥ इति तृतीयशते षष्ठोद्देशः समाप्तः ॥

॥ अथ तृतीयशते सप्तमोद्देशः ॥

अनभ्रेया विद्युत्सहसा तत् 'कपिहसितं' यथाऽपत्यादेवा पुत्रस्थानीयाः ।

॥ इति तृतीयशते सप्तमोद्देशः† ॥

॥ परिसमाप्तं तृतीयशतम् ॥

( चतुर्थशते न किञ्चिल्लेखनीयम् )

❀ अथ पञ्चमशतकमुच्यते ❀

अथ पञ्चमशते प्रथमोद्देशः—

'जंबुद्दीवे णं भंते ! दीवे सूरिया उदीणपाईणमुग्गच्छंति' क्षेत्रदिशमधिकृत्योच्यते—उत्तरदक्षिणयोस्तुल्यो

टी॰ † अष्टमनवमदशमोद्देशाः चूर्ण्यां न सन्ति ।

वर्षासमयः । पुरः पश्चाद्वायोः पुरस्कृते अनेनतरे (?) भविष्यति । तत् एष्यत्काले ।

॥ इति पञ्चमशते प्रथमोद्देशः ॥

॥ अथ पञ्चमशते द्वितीयोद्देशः ॥

सकद्धिकाकङ्कुः ( पु० ) ॥ इति पंचमशते द्वितीयोद्देशः ॥

॥ अथ पंचमशते तृतीयोद्देशः ॥

' से बहूनि ' अन्यमविकेन [1]प्रतिबद्धमेवं सर्वाणि न त्वेकभव एव बहूनि अतीताक्रान्तानि बहूनि ।

॥ इति पंचमशते तृतीयोद्देशः ॥

॥ अथ पञ्चमशते चतुर्थोद्देशः ॥

तंतं वीणादि विततं मुकुन्दादि, घनं-लकुटकादि, शुषिरं-वंशादि, 'आउडिज्जमाणाइं' परस्पराभिहन्यमानानि 'आरगयाइं' आराद्भागस्थितानि 'निव्वुडे नाणे केवलिस्स' शुद्धज्ञानं केवलिनः ।

डी० १ पु० प्रतिकामेवं ।

"जीवे णं भंते ! हसमाणे" इत्यादि एक[त्व]प्रश्ने सत्तविहबंधए वा अट्ठविहबंधए वा, बहुत्वप्रश्ने सत्तविहबंधगा वा अट्ठविहबंधगा वा, नेरइयाणं पुच्छा सव्वे वि ताव होज्ज, सत्तविहबंधगा, अहवा सत्तविहबंधगा अट्ठबंधए य, अहवा-सत्तविहबंधगा अट्ठविहबंधगा, यस्माच्च सर्वदायुर्बध्यते स्थित्यन्ते बन्धस्तस्मात् बहवः सप्तविह[1]बन्धबन्धकाश्च आयुषो बन्धकाले लभ्यन्ते, यदा पुनर्बहव एव लभ्यन्ते आयुषो बन्धकास्तदा तृतीयः । गर्भस्तु सजीवपुद्गलपिण्डिका, योनिः-जीवोत्पत्तिस्थानम् । कक्षायां रजोहरणं प्रतिग्रहणकं च कृत्वा अनौका नौकेऽतिव्याहरतु अति-प्रकर्षेण मनो धारयेत्, मनसः प्रयोगं कृतवानिति । यथा देवो जानाति मनसा व्याहृतम् आदानमिन्द्रियम्, वीर्य-शक्तिः, सहयोगि तद्द्रव्यं तस्य च लोगकरणतयेति । ॥ इति पञ्चमशते चतुर्थोद्देशः ॥



## ॥ अथ पञ्चमशते पंचमोद्देशः ॥

"एवंभूतं वेयणं वेदेति" यथाभूतं यथाबद्धमिति यावत् । 'अणेवंभूतंपि' यथा-बद्धमसौ न तत्तथा वेदयति सातं वा असातम् । ॥ इति पंचमशते पंचमोद्देशः ॥

टी० १ पु० बन्धबन्धका अथवा सप्तविधबन्धकाश्च अष्टविधबन्धकाश्च ।

## ॥ अथ पंचमशते षष्ठोद्देशः ॥

"गाहावतिस्स णं भंते" इत्यादि "मिच्छादंसणवत्तिया सिय" यस्मात् कदाचित् सम्यग्दृष्टिर्गृहपतिर्भवति । "से अभिसमण्णागते" "तं" कारिते यदुक्तम्—

सातिजेज्जा संचकारेज्ज, अणुवणीते अणनर्पिते च ते उपनीते अर्पिते मूल्ये यावत् तस्य तद्भाण्डं नोपनीयते तावत् विक्रयिकस्य ग्रहीतुं क्रिया महती, इषुः पतन् पुरुषः क्षेप्ता चिन्त्यते, एवं धनुरादिषु अविरतप्रत्ययो[बंधः] एवं तु धनुराद्यो यैर्निवर्त्तिता जीवैस्तेषां बन्धः । आधाय कर्मानवद्यम्, नात्र दोषः, यदि पुरस्करोति मया भोक्तव्यमेव को मे दोषः ? । "जे णं भंते ! परं असब्भूतेणेत्यादि" "तहप्पकारा चेव कम्मा कज्जंति ।" पुनरप्यसौ यत्रोत्पद्यते तत्र तद्विधैरेव ह्याख्यायते इति ।

## ॥ इति पंचमशते षष्ठोद्देशः समाप्तः ॥

## ॥ अथ पंचमशते सप्तमोद्देशः ॥

"परमाणुपोग्गले णं भंते !" इत्यादि एजते, विविधमेजते व्येजते, द्विप्रदेशो देश एजते, परमाणुरेक इत्यर्थः । "परमाणुपोग्गले णं भंते ? उदयावत्तं चेत्यादि" पर्यापन्नो-विनष्टः विनश्येद्वाऽसङ्ख्येयप्रदेशो यदि समस्ततोर्ध्वमस्ति

न मध्यं विषमप्रदेशोनार्द्धं समध्यः। *'परमाणुपोग्गले णं भंते'* इत्यादि देशेन देशं न स्पृशति अदेशत्वात् परमणोः अप्रदेशत्वात्। सर्वेण सर्वं स्पृशति ( देशत्वात् परमाणोः ) प्रदीपप्रमेव परमाणुः द्विप्रदेशिकस्कन्धं परमाणुः स्पृशन् सर्वेण देशं (?) सर्वेण वा सर्वं स्पृशति। सेय सएजः सकम्पः। *'परमाणुपोग्गलस्स अंतरं'* परमाणोरपगते परमाणुत्वे पुनः परमाणुत्वे भावो यस्तदन्तरम्। *'एयस्स णं भंते ! दव्वट्ठाणाउयस्स ओगाहणट्ठाणाउयस्स'* अल्पबहुत्वचिन्तायां ( प्रतायां ) प्रणीयते, द्रव्यतः स्थानं यत्तद् द्रव्यस्थानायुः, एवं क्षेत्रायुः चतुःप्रदेशतया यावत् तत्र क्षेत्रेऽवतिष्ठते तावत्क्षेत्रायुः। यावच्चतुःप्रदेश एव तत्क्षेत्रसमीपभ्रान्त्या भ्रमति तदवगाहनायुः। क्षेत्रस्थानायुः भ्राम्यतस्तु पार्श्वतोऽस्य क्षेत्रस्यावगाहनायुरपि भावनीयम् अतस्तस्याऽसङ्ख्येयगुणव्यपदेशोऽस्ति तत्स्थापना [• • ⁞ | •.• ⁞]

एवमपि एवं ( वद् ) गुणाधिको वर्णादिः एतद्गाथानुसारेण च द्रव्याद्यायुषोऽल्पबहुत्वव्याख्योपयुज्य कार्या—

"खेत्तोग्गाहणदव्वे, भावट्ठाणाउ अप्पबहुयत्ते। थोवा असंखगुणिआ, तिन्नि य सेसा कहं णेया ? ॥१॥
खेत्तामुत्तत्ताओ, तेण समं बंधपच्चयाभावा। तो पोग्गलाणं थोवो, खेत्तावट्ठाणकालो उ ॥२॥
अण्णखेत्तगयस्सवि, तं चिय माणं चिरंपि संभवइ। ओगाहणनासे पुण, खेत्तण्णं फुडं होइ ॥३॥
ओगाहणावबद्धा, खेत्तद्धा अक्किरियावबद्धाय। न उ ओग्गाहणकालो, खेत्तद्धामेत्तसम्बन्धो ॥४॥

टी. १ पु० ओगाहणावबद्धा अक्कि अक्कियावबद्धायणमु ओगाहणाकाको।

जम्हा तत्थण्णऽत्थ य, सच्चि य ओगाहणा भवे खेत्ते । तम्हा खेत्तद्धाओऽ,-वगाहणद्धा असंखगुणा ॥५॥
संकोयविकोएण व, उवरमिआएऽवगाहणाए वि । तत्तियमेत्ताणं चिय, चिरंपि दव्वाणऽवत्थाणं ॥६॥
[1]संघायभेयओ वा दव्वो,-वरमे पुण न संखित्ते । नियमा तद्दव्वोगाहणाए, नासो न संदेहो ॥७॥
ओगाहणद्धा दव्वे, संकोयविकोयओ य अवबद्धा । न उ दव्वं संकोयण,-विकोयमित्तेण संबद्धं ॥८॥
जम्हा तत्थऽण्णत्थ व, दव्वं ओगाहणाए तं चेव । दव्वद्धा संखगुणा, तम्हा ओगाहणद्धाओ ॥९॥
संघायभेयओ वा दव्वो,-वरमे वि पज्जवा संति । तं कसिणगुणविरामे, पुण न दव्वं न ओगाहो ॥१०॥
संघायभेयबंधा,-णुवत्तिणी निच्चमेव दव्वद्धा । न उ गुणकालो संघाय,-भेयमेत्तद्धसंबद्धो ॥११॥
जम्हा तत्थऽण्णत्थ य, दव्वे खेत्तावगाहणासुं च । ते चेव पज्जवा संति, तो तदद्धा असंखगुणा ॥१२॥
आह अणेगंतोऽयं, दव्वोवरमे गुणाणऽवत्थाणं । गुणविपरिणामंमि य, दव्वविसेसो यऽनेगंतो ॥१३॥
विपरिणयम्मि दव्वे, कम्मि गुणपरिणई भवे जुगवं । कम्मिवि पुण तदवत्थे, होइ पुण गुणा परिणामी ॥१४॥
भण्णइ सच्चं किं पुण, गुणबाहुल्ला न सव्वगुणनासो । दव्वस्स तदणत्तेऽवि, बहुतराणं गुणाण ठिई ॥१५॥

'पंचिंदियतिरिक्खजोणियाण'मित्यादि, उज्झरं-प्रपातं उदकस्य, [2]निज्झरं निर्झरं-स्यन्दनम् 'चिल्लल' चिक्खल- मिश्रम् [उदकम्] 'पल्लल' त्ति प्रह्लादनशीलम्, 'चरिका'-गृहप्राकारान्तरे हस्त्यादिप्रचारो [4]गोपुरद्वारे अथवा द्वारं-खडक्किका

टी०—१ पु० ओगाहणावबद्धा अकिअकियावबद्धायणसुओगाहणाकालो । २ पु० संघायभेयमेतद्ध । ३-पु० निस्तीरं । ४-पु० गुपुर देवकुलिका चतुर्दिगागतरथ्याहेतुस्थानद्वारे ।

गोपुरं वलानकम्, शृङ्गाटकं स्थापना △ त्रिकं स्थापना, चतुष्कस्थापना + चत्वरस्थापना ✻ चतुर्मुखं चतुर्मुख देवकुलिका चतुर्दिगागतरथ्या—हेतु-ज्ञानं छद्मस्थस्य यत्, अहेतुकं-केवलज्ञानम् ।

॥ इति पञ्चमशते सप्तमोद्देशः समाप्तः ॥

॥ अथ पञ्चमशते अष्टमोद्देशः ॥

'जे दव्वतो अप्पदेसे से खेत्तओ णियमा अपदेसे' इत्यादि, द्रव्यतः परमाणुरप्रदेशः क्षेत्रतोऽसौ नियमादप्रदेश एव, यस्मादसौ क्षेत्रस्यैकस्मिन्नेव प्रदेशेऽवगाहते, द्विप्रदेशादि च क्षेत्रं सप्रदेशमभिधीयते तस्मादप्रदेशः । कालत एकसमयस्थितिकं प्रदेशं स च परमाणुरेकसमयस्थितिकं द्रव्यमप्रदेशम्, द्विसमयादिस्थितिकं प्रदेशं स च परमाणुरेकसमयस्थितिको वा भवेद् द्विसमयादिस्थितिको वा तस्मात्स्यात्सप्रदेशः स्यादप्रदेश इति[1] । यः[2] पुनः क्षेत्रत एकप्रदेशावगाढः द्रव्यतो न स्यात् सप्रदेशः स्यादप्रदेशः । एकप्रदेशपरमाणोरवगाहः[2] । द्विप्रदेशकादीनां च यावदनन्तकोऽपि हि स्कन्ध एकप्रदेशोऽवगाहते, तेन यदा परमाणुरवगाढस्तदा अप्रदेशः, यदा द्विप्रदेशिकादिस्तदा

टी०—पु० भावत एकगुणकालकः प्रदेशः, द्विगुणकालकादिर्वा तस्मात्स्यात्प्रदेशः स्यादप्रदेश इति । २-पु० द्रव्यतः स स्यात् सप्रदेशस्यावप्रदेशः एकः स प्रदेशे परमाणोरवगाहः ।

सप्रदेशः । कालतः स परमाणुरेकसमयस्थितिर्द्व्यादिसमयस्थितिर्वा भवेत् । भावतः परमाणुः स्कन्धो वा एकगुणकालकः द्व्यादिगुणकालको भवेत् तस्मात्स्यात्सप्रदेशः स्यादप्रदेशो वा । यः पुनरेकसमयस्थितिकः सोऽप्रदेशः कालतः द्रव्यतः स स्यात् । क्षेत्रतः—योऽसौ एकसमयस्थितिकः स एकप्रदेशावगाढो भवेत् द्व्यादिषु वा न यस्मात् क्षेत्रतः स्यात् । भावतः योऽसौ एकसमयस्थितिकः स एकगुणकालको द्व्यादिर्वा भवेत् तस्माद्भावतः स्यात् । यः पुनर्भावतः एकगुणकालको द्रव्यतः स परमाणुप्रदेशः द्विप्रदेशिकादिर्वा सप्रदेशः, क्षेत्रत एकप्रदेशावगाढ द्व्यादिप्रदेशेषु वा, कालत एकसमयस्थितिको द्व्यादिर्वा, तस्मात् सर्वत्र *स्याद्वादः* । एवमुपयुज्य द्विप्रदेशिकादयोऽपि वाच्याः । *'एएसिं णं भंते ! पोग्गलाणं दव्वाओ से णं खेत्तादेसेण* इत्यादि ।'

एकगुणकालकादयः स्तोकाः, एकसमयस्थितिकाः असङ्ख्येयगुणाः, ततः परमाणवोऽसङ्ख्येयगुणाः, ततः क्षेत्रत एव द्विप्रदेशादयोऽसंख्येयगुणाः, ततः स्कन्धा विशेषातिरिक्ताः, द्विसमयस्थितिकास्ततोऽतिरिक्ताः, द्विगुणकालकादयस्ततोऽतिरिक्ताः, असंख्येयाः । सूत्रोक्तस्याल्पबहुत्वभावनार्थं गाथाप्रपञ्चः—

वोच्छं अप्पाबहुयं, दव्वे खेत्तद्धभावओ वावि । अपएससप्पएसाण, पोग्गलाणं समासेणं ॥१॥

दव्वेण[1] परमाणू, खेत्तेणेगप्पएसओगाढा । कालेणेगसमइया,[2] अपएसा पोग्गला होंति ॥२॥

टी०—१ पु० णं । २—पु० समतिया ।

भावेणं अपएसा, एगगुणा जे हवंति वण्णाई । ते च्चिय थोवा जं गुण,–बाहल्लं पायसो दव्वे ॥३॥
एत्तो कालाएसेण, सप्पएसा भवे असंखगुणा । किं कारणं पुण भावे, भण्णति परिणामबाहल्ला ॥४॥
भावेणं[३] अपएसा, जे ते कालेण हुंति दुविहा वि । दुगुणादओ वि एवं, भावेणं जावऽणंतगुणा ॥५॥
काला पएसयाणं, एवं एक्केक्कओ हवती रासी । एक्केक्कगुणट्ठाणम्मि, एगगुणकालतातीसु ॥६॥
आहाणंतगुणत्तण,–मेवं कालापएसयाणंति । जमणंतगुणट्ठाणेसु, होंति रासी वि हु अणंता ॥७॥
भण्णइ एगगुणाणवि, अणंतभागंमि जे अणंतगुणा । तेणाऽसंखगुणच्चिय, हवंति णाणंतगुणियत्तं ॥८॥
एवं ता भावमिणं, पडुच्च कालापएसिया सिद्धा । परमाणुपोग्गलाइसु, दव्वेवि हु एस चेव गमो ॥९॥

३–पु० भावेणं पुण पसा । ४–पु० सु ।

| भावऽप्प | सप्प | कालप्प | सप्प | दव्वप्प | सप्प | खेत्तऽप्प | सप्प |
|---|---|---|---|---|---|---|---|
| | | | | ५००० | ९५००० | १०००० | ९०००० |
| १००० | ९९००० | २००० | ९८००० | लक्खो अट्ठवणा रासी परिकप्पिओ | | | |

एमेव होइ खेत्ते, एगपएसावगाहणाईसुं । ठाणंतरसंकंतिं, पडुच्च कालेण मग्गणया ॥१०॥
संकोयविकोयंपि हु, पडुच्च ओगाहणाय एमेव । तह सुहुमबायरणिरेय,—सेयसद्दाइपरिणामं ॥११॥
एवं जो सव्वोच्चिय, परिणामो पोग्गलाण इह समए । तं तं पडुच्च एसिं, कालेणं अप्पएसत्तं ॥१२॥
कालेण अप्पएसा, एवं भावा पएसएहिंतो । होति असंखेज्जगुणा, सिद्धा परिणामबाहल्ला ॥१३॥
एत्तो दव्वादेसेण, अपदेसा हवंति ( १अपएसा भावाढत्ता असंखगुणा
सपएरा दव्वउत्ता विसेसाहिया ) संखगुणा । के पुण ते ? परमाणू, कह ते ? बहुयत्ति तं सुणसु ॥१४॥
अणु संखेज्ज पएसिय, असंखणंतपएसिया चेव । चउरो च्चिय रासी पोग्गलाण लोए अणंताणं ॥१५॥
तथाणंतेहिंतो सुत्तेऽणंतप्पएसिएहिंतो । जेण प्पएसट्ठाए, भणिया अणवो अणंतगुणा ॥१६॥
संखेज्जतिमे भागे, संखेज्जपएसियाण वट्टंति । नवरमसंखेज्जपएसि,—आण भागे असंखतिमे ॥१७॥
सइवि असंखपएसि,—आण तेसिं असंखभागत्ते । बाहुल्लं साहिज्जइ, फुडमवसेसाहिं रासीहिं ॥१८॥
जेणेक्कर‍ासिणो च्चिय, असंखभागेण सेसरासीणं । तेणासंखेज्जगुणा, अणवो कालापएसेहिं ॥१९॥
एत्तो असंखगुणिया, हवंति खेत्ता पएसिया समये । जं ते सा सव्वेवि य, अपएसा खेत्तओ अणवो ॥२०॥

टी०—१–अयं पाठः प्रत्योः अधिको दृश्यते ।

दुपएसियाइसु वि पएस,-पविट्ठएसु ठाणेसु । लब्भइ इक्किक्को चिय, रासी खेत्तापएसाणं ॥२१॥
एत्तो खेत्ताएसेण, चेव सपएसया असंखगुणा । एगपएसोगाढे, मोत्तुं सेसावगाहणया ॥२२॥
ते पुण दुपएसोगाहणा,-इया सव्वपोग्गला सेसा । ते य असंखेज्जगुणा, अवगाहण ठाणबाहुल्ला ॥२३॥
दव्वेण होंति एत्तो, सपएसा पोग्गला विसेसहिया । कालेण य भावेण य, एमेव भवे विसेसहिया ॥२४॥
भावाईया वट्टा, असंखगुणिया जमप्पएसाणं । तो सप्पएसयाणं, खेत्ताइविसेसपरिवुड्ढी ॥२५॥
मीसाण संकमं पति, सपएसा खेत्तओ असंखगुणा । भणिया सट्ठाणे पुण, थोवच्चिय ते गहेयव्वा ॥२६॥
खेत्तेण सप्पएसा, थोवा दव्वट्ठभावओ अहिया । सपएसप्पाबहुयं, सट्ठाणे अत्थओ एवं ॥२७॥
पढमं अपएसाणं, बीयं पुण होइ सप्पएसाणं । तइयं पुण मीसाणं अप्पबहुं अत्थओ तिण्णि ॥२८॥
ठाणे ठाणे वड्ढइ भावाईणं जमप्पएसाणं । तं चिय भावाईणं, परिभस्सति सप्पएसाणं ॥२९॥
अहवा खेत्ताईणं, जमप्पएसाण हायइ कमसो । तं चिय खेत्ताईणं, परिवड्ढइ सप्पएसाणं ॥३०॥
अवरो परप्पसिद्धा, वुड्ढी हाणी य होइ दोण्हंपि । अपएससप्पएसाणं, पोग्गलाण सलक्खणओ ॥३१॥
ते चेव ते चउहिवि, जमुवचरिज्जंति पोग्गला दुविहा । तेण उ वुड्ढी हाणी, तेसिं अण्णोण्णसंसिद्धा ॥३२॥
एएसिं रासीणं, निदरिसमिणं भणामि पच्चक्खं । वुड्ढीए सव्वपोग्गल, जावं तावाण लक्खाओ ॥३३॥

एकं च दोय पंच य, दसय सहस्साइं अप्पएसाणं । भावाईणं क्रमसो, चउण्ह वि जहोवइट्ठाणं ॥३४॥
णउई पंचाणउई, अट्ठाणउई तहेव नवनवई । एवइयाइं सहस्साइं, सप्पएसाण विवरियं ॥३५॥
एएसिं जहसंभव,-मत्थोवणयं करिज्ज रासीणं । सब्भावओ य जाणिज्ज, ते अणंते जिणाभिहिये ॥३६॥

एवमेतद्गाथाभिरल्पबहुत्वं पुद्गलानां चिन्तितम् । 'नेरइया णं भंते ! केवतियं कालं अवट्ठिया ? जहण्णेणं एकसमयं उक्कोसेणं चउव्वीसं मुहुत्ता, सत्तसु पुढवीसु अवट्ठाणं बारसमुहुत्ता ण कोति उववज्जति उवट्टेइ वा, अण्णेसिं पुणा(तिं) बारसमुहुत्तेसु जावतिया उवट्टंति तावतिया चेव उववज्जंति तेण चउव्वीसं मुहुत्ता अवट्ठाणं भणियं । वक्कंतीए पुण बारस मुहुत्ता । आदिल्लागहिया जेसु ण कोऽवि उव्वट्टति उववज्जति वा, एवमनया भावनया रत्नप्रभादिषु व्युत्क्रामन्तिपदे चावस्थानमुक्तं तदिह द्विगुणकर्त्तव्यमुपपत्त्युद्वर्त्तनाकालेन सहेत्यर्थः । सिद्धानामुत्कर्षेणाष्टसामयिकी निरंतरं वृद्धिः । ॥ इति पञ्चमशतेऽष्टमोद्देशः समाप्तः ॥

## ॥ अथ पञ्चमशते नवमोद्देशः ॥

पृथिव्यादिसमुदायो राजगृहं, न पृथिव्यादिसमुदयादृते राजगृहशब्दप्रवृत्तिः । *'अणंता जीवघणा उपज्जित्ता उपज्जित्ता णिलिज्जंति'* इत्यादि अनन्ताः सन्तत्या, परीत्ता दृश्यमानाः, अनन्ता जीवघनाः सूक्ष्मभेदाः ( परीत्ताः ) सुरान्

प्रतीत्य औदारिकशरीरपरिणामभाज इति *णिज्जिंति*—विनश्यन्ति ।

॥ इति पञ्चमशतके नवमोद्देशः ॥

॥ समाप्तं च पञ्चमशतकम् ॥



॥ अथ षष्ठशतकम् ॥

॥ अथ षष्ठशतके प्रथमोद्देशः ॥

*'से णूणं भंते ! जे महावेयण'* इत्यादि महावेदनः—महानिर्जर इति आमेवम्, किन्तु स श्रेयान् यः प्रशस्तनिर्जरः स च महावेदनो वा भवतु । *'कतिविहेणं भंते ! करणे पण्णते'* इत्यादि कर्मकरणं—उवट्टणाकरणं उवट्टणाकरणं च कर्मकरणम् ।

॥ इति षष्ठशतके प्रथमोद्देशः ॥

॥ अथ षष्ठशतके द्वितीयोद्देशः ॥

*'से णूणं भंते ! महाकम्मस'* इत्यादि महती क्रिया यस्य स, महानाश्रवः, महती च वेदना यस्य [ स

महावेदनः ] सदा [1]समितं—सदा सम्यगितं सन्ततमिति 'अनिच्छा'—अनभिप्रेतार्थे, [2]अनभिलापे 'तन्तुगयस्स वा'—तन्त्रादापनीतमात्रस्य तस्य परिभोगकाले मलादिभिरपचये उपचये वा शुभपरिणामो भवति । कर्मोपचयः—प्रयोगतो न विस्रसा, ईर्यापथिकं कर्म्म सादिसपर्यवसानं भवसिद्धिकानां—भवसिद्धिकानां भव्यत्वलब्धिः सिद्धत्वेऽपैति । 'तिण्णि य वाससहस्साइं अबाहा अबाहूणिया कम्मट्ठिति कम्मनिसेओ' अबाहाकालेन न्यूनः चाबाहाकालोनः, स च अबाधाकालः त्रीणि वर्षसहस्राणि, एतदुक्तं भवति—उपात्तमपि तद्दलिकद्रव्यं त्रीणि वर्षसहस्राणि अवेद्यमानसंस्पृष्टमास्ते । एवमन्यकर्मस्वपि अबाधाकालो व्याख्येयः । 'णाणावरणिज्जं णं भंते ! कम्मं किं इत्थि बंधती'त्यादि प्रश्नः न स्त्री [ न ] पुरुषः न नपुंसकः केवली स न बध्नाति, विग्रहगतौ च यः स न स्त्री न पुमान्न[न]पुंसकः बध्नाति, अतः स्यात्प्रयोगः आउयं णं भंते ! पुच्छा स्त्री—पुरुष—नपुंसकाः स्याद्बध्नन्ति स्यान्न, कथम् ? अपच्च+काले आयुर्न बध्नाति [[3]बन्धकाले बध्नाति ] तस्मात् स्यात् अपश्चिमक्षपकः पुरुषो वेदे क्षपिते केवली सिद्धश्च एते न बध्नन्ति आयुः । 'णाणावरणिज्जमि'त्यादि सरागसंयमो बध्नाति, वीतरागसंयतो न बध्ना[ति] असंयतो मिथ्यादृष्टिः स बध्नात्येव, संयतासंयतः श्रावकः स च बध्नाति, पश्चिमकेवली स न बध्नाति, [4]'णाणावरणिज्जमि'त्यादि सम्यग्दृष्टिशब्दो विशेषरुचिर्दर्शनं सम्यग्दृष्टिशब्देनात्रोच्यते, केवली च ततः स्यादिति प्रयुज्यते, मिथ्यादृष्टिश्च [ सम्यग्मिथ्यादृष्टिश्च ] एतौ द्वावपि

टी०—१ पु० समित्तं । २-पु० प्रभिन्ना । + अपक्वकाले ३ पु० प्रतावस्ति अयं पाठः । ४-पु० त्येवं आयुः ।

बध्नीतः, आयुस्तु सम्यग्दृष्टिकेवली स न बध्नाति, इतरस्तु पुनरबन्धनकाले न बध्नाति, बन्धकाले तु बध्नात्येवं मिथ्यादृष्टिरपि, सम्यग्मिथ्यादृष्टिर्न बध्नात्येवायुर्यदा प्रतिपतितमस्य भवति सम्यग्मिथ्यादृष्टित्वम्, तदा बध्नाति, इतरस्तु पुनरबन्धनकाले न बध्नाति, बन्धनकाले तु बध्नात्येवं मिथ्यादृष्टिरपि सम्यग्मिथ्यादृष्टिर्न बध्नात्येवायुर्यदा प्रतिपतितमस्य भवति सम्यग्मिथ्यादृष्टित्वम्, तदा बध्नाति, *'णाणावरणिज्जमि'त्यादि* संज्ञाशब्देन ईहापायादिसंज्ञा[1]-हारादिसंज्ञाश्च गृह्यन्ते तेन सरागसंयतः संज्ञी स बध्नाति, वीतरागसंयतः संज्ञी स न बध्नाति, तस्मात् स्यात्, असंज्ञी बध्नात्येव, पश्चिमकेवली सिद्धश्च स न बध्नाति भव्यसिद्धकः केवली स न बध्नाति, [2]तद्व्यतिरिक्तस्तु भव्यः सः बध्नाति तेन स्यात्, पश्चिमसिद्धः स न बध्नाति वेदनीयं, भव्यः स्यात्, शैलेश्यवस्थायां न बध्नात्यन्यदा तु बध्नाति, आयुर्भव्याभव्यौ स्यात्, अबन्धकाले न बध्नीतः भव्यो यः केवली स च न बध्नाति, भव्योऽन्यः बन्धकाले बध्नाति तेन स्यात्, *'णाणावरणिज्ज'मित्यादि* । चक्षुरचक्षुरवधिदर्शनिनः स्यात्, कथम् ? उपशमक्षपकतां प्रतीत्य यदा एकविधबन्धकस्तदा 'णाणावरण' ( ज्ञानावरणीयं ) न बध्नाति शेषास्तु बध्नन्ति । केवलदर्शनी न बध्नाति स च भवस्थसिद्धः केवली वा, वेदनीयमुपशमकक्षपकावपि बध्नीतः, केवलदर्शनी तु सयोगी बध्नाति[3] अयोगी न बध्नाति तेन स्यात्, *'णाणावरणिज्जमित्यादि'* पर्याप्तककेवली न बध्नाति शेषो बध्नाति, अपर्याप्तको बध्नाति, [4]आयुस्तु पर्याप्तकः स्यात् केवली [स न] बध्नाति, शेषस्तु स्याद्बन्धकाऽबन्धककालतः अपर्याप्तकोऽपि स्यात् *'णाणावरणिज्जमित्यादि'*

१-पु० शब्देन ईहागायादिसंज्ञाऽऽ । २ पु० न सिद्धिकः केवली स न बध्नाति तद्व्यतिरिक्त । ३-पु० के । ४-पु० नास्ति ।

भाषकाभाषकौ द्वावपि स्यात् भाषकः केवली स न बध्नाति अन्ये बध्नन्ति । अभाषका पृथिवीकायादयः विग्रह-गतिसमापन्नाश्च ते बध्नन्ति, अयोगिकेवलिसिद्धौ अभाषकौ तौ न बध्नीतः, तेन स्यात् प्रयोगः । भाषकः केवली स सद्वेद्यमपि बध्नाति, अभाषकाः सिद्धास्ते न बध्नन्ति, एकेन्द्रियादयो बध्नन्ति तेन स्यात्, ज्ञानावरणीयं परीत्तः केवल्यपि स न बध्नाति, उपशमकक्षपकावन्ये च परीत्तत्वेऽपि बध्नन्ति, तस्मात् स्यात् । अपरीत्तः अभव्यः स बध्नात्येव, पश्चिमः सिद्धः स न बध्नाति, आयुः परीत्तः स्यात् केवली परीत्तः स न बध्नाति अन्ये अपरीत्तत्वेऽपि सत्यपि स्यात्, अबन्धकालः बन्धकालतः पश्चिमः सिद्धः स न बध्नाति, *'णाणावरणिज्जाणमित्यादि'* आभिनिबोधिकज्ञान्यादयश्चत्वारोऽपि स्यात्, कथम् ! उपशमक-क्षपकश्रेणिभ्यां भावना कार्या ।

वेदनीयं केवलज्ञानी स्यात् सिद्धः अयोगिकेवली च न बध्नीतः शेषो बध्नाति, मनोयोगी स्यात् उपशमकः[१] [ श्रेणि ] प्राप्तः वाक्काययोगी अनाहारको विग्रहगतिकः स बध्नाति, सिद्धो न बध्नाति तस्मात् स्यात् । बादरः केवल्यपि तेन स्यात् ।

आयुः सूक्ष्मः बादरो वा स्यात् अबन्धकालभावनया, बन्धे वा बादरः केवली स न बध्नाति, अन्ये बध्नन्ति तेन वा स्यात् । चरमः उपशमक-क्षपकश्रेणिप्राप्तः स न बध्नाति, अनारूढो बध्नाति । अचरम उपशम-

टी०-१ पु० क्षपकश्च ।

श्रेणिप्राप्तः न बध्नाति तेन स्यात् । अस्मिन्नेवोद्देशके इदमतीतं सूत्रमङ्गीकृत्य गाथा लिख्यते—

*"सिद्धा गई पडुच्च, सातिया अपज्जवसियत्ति"* कथमेतद्भाव्यते—

आह—"सातिअपज्जवासिया, सिद्धा ण य नाम तीयकालंमि । आसि कयाइवि सुण्णा, सिद्धी सिद्धेहिं सिद्धंते ॥१॥

सव्वं साइ सरीरं, न य नामाइ मयदेहसब्भाओ । कालाणाइत्तणओ, जहा व राइंदियाईणं ॥२॥

सव्वो साई सिद्धो, न यादिमो विज्जई तहा तं च । सिद्धि सिद्धा य सया, निद्दिट्ठा रोहपुच्छाए ॥३॥"

## ॥ इति षष्ठशतके तृतीयोद्देशः ॥

## ॥ अथ षष्ठशतके चतुर्थोद्देशः ॥

जीवे णं भंते[१] कालादेशेन जीवः सप्रदेशः कथम् ? यो ह्येकसमयस्थितिः स अप्रदेशः [२]द्व्यादिसमयोत्पन्नो यः स सप्रदेशः, तेन स्यात् । 'णेरइया सव्वेवि ताव होज्ज सपएसा' जघन्योत्कृष्टस्थितयः बहवः तेन

टी०-१ पु० काळादेशेनेत्यादि । २-पु० द्विसमयादिः यस्य स्थितिः स सप्रदेशः, न च जीवः समयमात्रस्थितः अनादित्वात् किन्तु अनन्तसमयस्थितिरेव (वा) तः सप्रदेशः । अनया च गाथया सर्वत्र भावना कार्या—

जो जस्स पढमसमए, वट्टइ भावस्स सो उ अपदेसो । अण्णम्मि वट्टमाणो, कालाएसेण अपदेसो ॥१॥

नारको यः प्रथमसमयोत्पन्नः सोऽप्रदेशः ।

द्व्यादिसमयोत्पन्नका बहवः, जघन्यायां स्थितौ समयाधिकायामल्पतोऽनुपातः, तस्यां च प्रथमसमयोत्पन्न लभ्येतैकः अत उच्यते—'सपएसो य अपएसो य' प्रथमसमयोत्पन्ना बहवो लभ्यन्ते यदा तदोच्यन्ते—'सपदेसा य अपदेसा य' एकेन्द्रियाणां बहूनां युगपदुपपात इति। तत्र बहवः प्रथमसमयोत्पन्ना बहवश्च द्विसमयाद्युत्पन्नास्तेन सप्रदेशा अप्रदेशाश्च 'आहारये णं बधे' इत्यादि आहारकः कालतः अस्ति विग्रहकाले अनाहारकः तस्मादाहारकः कालादाहारकत्वेन यः प्रथमसमयोत्पन्नः सोऽप्रदेशः, द्विसमयादिर्यः सप्रदेशः, तेन स्यात् [1]अनाहारकः सप्रदेशस्तेन स्यात्। अन्ये विग्रहगतिस्था अनाहारकास्तेषामेकं द्वौ वाऽनाहारक इति ये त्वनाहारकप्रथमसमये वर्त्तन्ते, ते अप्रदेशाः, ये द्वित्र्यादिषु अनाहारकसमयेषु वर्त्तन्ते ते सप्रदेशाः। एकेन्द्रियेषु बहव उत्पद्यन्ते इति। अतो भङ्गकद्विन्द्रीयादीनां स्तोकतराणामुत्पात इति। एकद्विलाभोऽस्ति, एकद्विलाभे च भङ्गसंभवः, भव्यत्वस्यानादित्वात् सप्रदेशता, भव्यनारकः प्रथमसमयोत्पातेऽप्रदेशः, द्विसमयादिना सप्रदेशः, सल्लेश्यातोऽनादिरयं भावस्तस्मात्सप्रदेशः, पृथिव्यब्वनस्पतिषु[2] तेजोलेश्यो देवो लभ्यत इति[3]। एकद्विसंभवाच्च षड्भङ्गाः, अलेश्यसिद्धः प्रथमसमयेऽप्रदेशः, द्विसमयादिः सप्रदेशः, सम्यग्दर्शनलब्धिर्या प्रथमसमये तत्राप्रदेशः, शेषेषु सप्रदेशः, केवलिसिद्धावुभावपि सम्यग्दृष्टी प्रथमसमयकेवली प्रथमसमयसिद्धत्वे[4] अप्रदेशः, शेषः सप्रदेशः। एकेन्द्रिया नित्यमिथ्यादृष्टय इति वर्जनीयाः, मिथ्यादृष्टिः स्यात्,

१ पु० 'अनाहारए णं भंते!' इत्यादि। २ पु० त्रिषु। ३ पु० एकद्विसंभवः। ४ पु० सिद्धिश्च।

कथम् ? यस्य सम्यग्दर्शनं पतितं स मिथ्यादृष्टित्वप्रथमसमयेऽप्रदेशः, शेषस्तु सप्रदेशः न पृथक् च त्रिकभङ्गकः एकबहुत्वभंगसम्भवात् । सम्यग्मिथ्यादृष्टिः स्यात्, कथम् ? प्रथमसमये यस्य सम्यग्मिथ्यादृष्टित्वपरिणामः सोऽप्रदेशः, शेषस्तु सप्रदेशः, संयतत्वं यस्य प्रथमसमयप्रतिपन्नस्य सोऽप्रदेशः, शेषस्तु सप्रदेशः । असंयतो यो हि संयतः असंयतपरिणामं गतः स प्रथमसमयेऽप्रदेशः, शेषेषु सप्रदेशः[1], [2]सकषायी उपशमको यः प्रतिपतितः स पूर्वमभूद-कषायी प्रथमसमये कषायतां गतः सोऽप्रदेशः, शेषेषु सप्रदेशः ।

"कोहे माणे माया, बोधव्वा सुरगणेहिं छब्भंगा । माणे माया लोभे, णेरतिएहिं पि छब्भंगा ॥१॥"

नारकाः क्रोधप्रचुराः, देवाः लोभप्रचुरा इति । अकषायी सिद्धः केवली च प्रथमसमयोत्पत्तौ अप्रदेशः, शेषेषु सप्रदेशः । ज्ञानी स्यात्, पूर्वमभूदज्ञानी ज्ञानित्वे यः प्रथमसमयः तत्राप्रदेशः, शेषेषु सप्रदेशः, एवमवधि-मनःपर्यायकेवलेषु भाव्यम् । ज्ञानी यः अज्ञानतां गच्छति तदा प्रथमसमये अप्रदेशः, शेषेषु सप्रदेशः । सयोगी अनादित्वात्, भावस्य नियमात् सप्रदेशः, अयोगी सिद्धः प्रथमसमयेऽप्रदेशः, शेषेषु सप्रदेशः ।

'सागारोवउत्तेसु सागारो सनाणे, अणगारो सदंसणे भवति' 'जं समयं जाणति णो तं समयं पासति

१ पु० इति । २ पु० संयतासंयतः श्रावकः यस्य श्रावकत्वप्रतिपत्तेः प्रथमसमयः सोऽप्रदेशः, शेषेषु सप्रदेशः । नोसंज्ञी नोऽसंज्ञी सिद्धः प्रथमसमयेऽप्रदेशः शेषेषु सप्रदेशः ।

इति भिन्नः कालः । साकारानाकारोपयोगयोर्भिन्ने सति अनाकारोपयोगापगमे यदा साकारोपयोगं गतः स प्रथमसमयेऽप्रदेशः, ततः परं सप्रदेशः स्यात् । एवमनाकारोपयोगेऽपि स वेदकः । उपशमको यदा अवेदकः सन् प्रतिपतितः तदा प्रथमसमये सवेदकत्वेनाप्रदेशः, ततः परं सप्रदेशः, अन्यवेदसंक्रान्तेः स्त्रीपुंनपुंसकभेदा[१] भावनीयाः । अवेदकाः क्षपकोपशमककेवलिसिद्धाः एषां प्रथमसमयेऽप्रदेशता शेषेषु सप्रदेशता । शरीरत्वमनादिरयंभावः—अनादित्वात् भावस्य नियमात् सप्रदेशता । औदारिकादिषु अन्योन्यं संक्रान्तौ प्रथमसमयेऽप्रदेशता, शेषेषु सप्रदेशता । तैजसकार्मणयोरनादिसंयोगः अनादित्वात् नियमात्सप्रदेशता । अशरीरः सिद्धः तत्र प्रथमसमयेऽप्रदेशता । विग्रहगतौ अनाहारकस्य आहारपर्याप्तिगतस्य प्रथमसमयेऽप्रदेशता, शेषेषु सप्रदेशता । एवं शरीरेन्द्रियपर्याप्तिः प्राणापानपर्याप्तिः अभाषकस्याऽभाषकसंक्रान्तौ भाषापर्याप्तिभावना कार्या । मनःपर्याप्तिरपि । एवमाहारकपर्याप्त्या अपर्याप्तकः पूर्वमाहारकपर्याप्त्या पर्याप्तकः सन् अपर्याप्ततां गतः स प्रथमसमयेऽप्रदेशः, शेषेषु सप्रदेशः । एवं शेषा,—पच्चक्खाणाऽपच्चक्खाणं देशप्रत्याख्यानमित्युक्तं भवतीति ।

## ॥ इति षष्ठशतके चतुर्थोद्देशकः समाप्तः ॥

१ पु० वेदा ।

## ॥ अथ षष्ठशतके पंचमषष्ठोद्देशकौ ॥

'किमियं भंते ! तमुक्काए त्ति पवुच्चति' इत्यादि पृथिवीप्रकाशनसमर्थोऽपि काचिद्भवति, तेन शुभः पृथिवीकाय. येन देशं प्रकाशयति कश्चिन्न देशं नत्वेवमापः । 'अहेमलुगमूलसंठिए अत्थि णं भंते ! तमुक्काये चंदाभातिवेत्यादि' 'का दूसणिया पुण सा' क आत्मा निगद्यते आत्मानं दूषयति, 'तमुक्कायत्तेण परिणमतीति' 'कति णं भंते ! कण्णराइत्तो पण्णत्ताउ'इत्यादि 'हिट्ठ' बंभलोए कप्पे हव्वि समं किला' 'केवइयं पाउणेज्जा' प्राप्नुयात् 'लोगंते वा एगपएसियं सेढिं मोत्तूण' नह्येकप्रदेशश्रेण्यां जीवस्यावगाहो भवति ।

## ॥ इति षष्ठशतके पंचमषष्ठोद्देशकौ समाप्तौ ॥

## ॥ अथ षष्ठशतके सप्तमोद्देशकः ॥

आलिसंदकः चवलकप्रकारः पसिमंथगा-वृत्तचनकाः, अणुवृत्तमागलकः । ॥ इति षष्ठशतके सप्तमोद्देशकः ॥

## ॥ अथ षष्ठशतके अष्टमोद्देशकः ॥

चउव्विहे[1] आउयबंधे पण्णत्ते—जाति-णाम-णिहत्ताउये इत्यादि एकेन्द्रियादिजातेः प्राधान्यादिविवक्षया उपादानं

टी०-१ पु० छव्विहे ।

क्रियते गतिस्थित्यवगाहप्रदेशानुभागेषु सर्वत्र प्राधान्यविवक्षा कार्या । ॥ इति षष्ठशतके अष्टमोद्देशकः ॥

## ॥ अथ षष्ठशते नवमोद्देशकः ॥

*'किं इहगये पोग्गले परियाइत्ता विउव्वत्ति'* 'इहगत'–इति यत्र स्थितो भगवान् गौतमस्वामी पृच्छति, 'तत्र गत' इति यत्रैव व्यवस्थितो देवस्तत्रैव देवसमीप इत्यर्थः, 'अण्णत्थ' इति यत्रस्थितस्तत्र न गृह्णाति, तेन यत्रस्थो गौतमः पृच्छति अन्यत्रस्थितो न क्वापि गृह्णाति । *'अविसुद्धलेसेण भंते ! देवे असमोहएणं अप्पाणेण'*[1] इत्यादि, अविशुद्धलेश्यो विभंगज्ञानी असमोहता–अनुपयुक्तः । 'अविसुद्धलेसे असमोहतेण अप्पाणेणं अविसुद्धलेसं देवं देविं अण्णयरं ( अणगारं ) जाणंति पासंति णो इणट्ठे समट्ठे' ॥ इति एको विकल्पः ॥

'अविसुद्धलेसे असमोहते विसुद्धलेसं ! णो इणट्ठे समट्ठे' ॥ इति द्वितीयो विकल्पः ॥

'अविसुद्धलेसे समोहते विसुद्धलेस्सं देवं देविं अण्णयरं वा णो इणट्ठे समट्ठे' ॥ इति तृतीयः विकल्पः ॥

'अविसुद्धलेसे समोहते ,, ,, ,, ,, ,, ,, ,, ,, ॥ ,, चतुर्थः ,, ॥

---

टी० १ पु० 'अविसुद्धलेसं देवं देवीअन्नयरं जाणति पासति नो तिणट्ठे समत्थे' एको विकल्पः 'अतिसुद्धलेसे असमोहतेणं अप्पाणेणं' णो तिणट्ठे समत्थे' द्वितीयविकल्पः ।

' ,, समोहया समोहएणं अविसुद्धलेसं देवं देविं ,, ,, ,, ,, ॥ इति पञ्चमः त्रिकल्पः ॥
' ,, ,, विसुद्धलेसं ,, ,, ,, ,, ,, ,, ॥ ,, षष्ठः ,, ॥
' विसुद्धलेसे असमोहएणं अविसुद्धलेसं ,, ,, ,, ,, ,, ,, ॥ ,, सप्तमः ,, ॥
' ,, ,, विसुद्धलेसं ,, ,, ,, ,, ,, ,, ॥ ,, अष्टमः ,, ॥

एतैरष्टभिर्विकल्पैर्न जानीते ।

' विसुद्धलेसे समोहएणं अविसुद्धं देवं इ ? हंता जाणति ' ॥ ,, नवमः ,, ॥
' ,, समोहएणं विसुद्धलेसं ,, ,, ,, ,, ' ॥ ,, दशमः ,, ॥
' ,, समोहयासमोहएणं अविसुद्धलेसं ,, ,, ,, ,, ' ॥ ,, एकादशः ,, ॥
' ,, ,, विसुद्धं ,, ,, ,, ,, पासइ इति' ॥ ,, द्वादशः ,, ॥

एतैश्चतुर्भिर्विकल्पैरपि जानीते । ॥ इति षष्ठशते नवमोद्देशकः ॥

## ॥ अथ षष्ठशते दशमोद्देशकः ॥

'जीवे णं भंते ! जीवे जीवे जीवे ?' जीवशब्देनात्र जीव एव गृह्यते, द्वितीयजीवशब्देन चैतन्यमुच्यते इत्यतः स प्रश्नः जीवति भंते ! जीवे जीवे जीवे जीवे जीवइ ? आयुःकर्मद्रव्यतया जीवतीति जीवनमुच्यते । आहच्च सायं-कदाचित् सातम् कथम् ! "उववाएण वसायं नेरइओ देवकम्मुणा वावि" देवाः कदाचिदसातं प्रियविप्रयोगाहननादिषु । 'नेरइयाणं भंते ! जे पोग्गले अत्तमायाए आहारंति' आत्मना आदाय-गृहीत्वा आहारयन्ति, किमात्मशरीरक्षेत्रावगाढे आहारयन्ति ? तस्मादपि परतः परंपरा क्षेत्रावगाढ इति ।

## ॥ इति षष्ठशते दशमोद्देशकः ॥

## ॥ समाप्तमिदं षष्ठशतकम् ॥

## ॥ अथ सप्तमशतकम् ॥

### अथ सप्तमशतके प्रथमोद्देशः—

'जीवेणं भंते ! कं समयं अणाहारए भवइ" इत्यादि अधोलोके ऊर्ध्वलोके यस्योत्पादः सोऽवश्यमेकेन समयेन

विश्रेणितः समश्रेणिर्भवति, अन्येन लोकं प्रविशति पुनरूर्ध्वलोकनाडीं गच्छति, गत्वा लोकनाडीतः निष्क्रामति अलोके न गच्छति । केचित् पञ्चमोऽपि विश्रेणिगमनमपि नारक उत्पद्यते, यः श्रेणितः भरतात् ऐरावते उत्पत्तुकामः स केन समश्रेणिं गच्छति, तत्रानाहारकः द्वितीयेनैरावते तृतीये नरकं तत्रावश्यमाहारकः । यत्र वा प्रथममुत्पन्नः १×शरीरमुत्क्रान्त ×समएव ।

*"जीवे णं भंते ! कं कालं सव्वप्पहारए भवति"* इत्यादि सर्वाल्पाहारः कदा ? यदा प्रथमसमयोत्पन्नः भवस्थस्य चरमसमयस्थ समयेन गतेन न अन्यत्रोत्पत्स्यते इति यावदुक्तं भवति–अत्र सर्वाल्पाहारकम् । *सुपइट्ठग-संठिए लोए पण्णत्ते*, सुप्रतिष्ठकं शरयन्त्रकम् । *'अत्थि णं भंते ! अकम्मस्स गती पण्णायती'*त्यादि गतिः प्रज्ञायते–अभ्युपगम्यते इति यावत् । *'निस्संगताए'* मलापगमात्, नीरागता मोहोपगमात्, अलाबुद्रव्यस्य, तथा परिणामात् अग्नेरूर्ध्वं विस्रसात इन्धनं विमुच्य धूमस्य गतिः । पूर्वप्रयोगान्मोक्षं यातव्यमिति । 'अतिवत्तिता'–अतिक्रम्य । *'दुक्खी भंते नेरइया'* इत्यादि किं दुःखिनो दुःखमिति? प्रश्नः । *'परियायई'* इति, परि–समन्तात् भावे सामस्त्येन आपिपत्ति पर्यापिपत्तिस्तूर्यक्षेत्रातिक्रान्तमिदम्, *वेसियं*–विश्वासनीयं शुभं न हन्ति, न घातयति, घ्नन्तं नानुमोदते ।

टी० १ पु ×भरतात् ण शरीरमुक्त्यन्तसमयेव× एवंविधपाठः ।

न पचति इ० न क्रीणाति इ० एताः नवकोट्यः । ॥ इति सप्तमशते प्रथमोद्देशः ॥

## ॥ अथ सप्तमशते द्वितीयोद्देशः ॥

सर्वजीवेभ्योऽभयमिति वदतोऽसंयतस्य चङ्क्रमणस्थानादिषु या क्रिया अप्रत्युपेक्षमाणस्य तत्रासौ अतिक्रामति व्रतम्, यो जीवाजीवविशेषं वेत्ति तस्य सुप्रत्याख्यानं भवति । उपभोगः–सकृत्, परिभोगः–पुनः पुनः मूलगुणादेशविरतानामप्यस्ति । 'पंचिंदियतिरिक्खजोणिया णं भंते ! किं मूलगुणपच्चक्खाणी उत्तरगुणपच्चक्खाणी अपच्चक्खाणी तिविहा'त्ति अत्र गाथयैव चोद्यम्—

"तिरियाणं चारित्तं, निवारियं अह य तो पुणो तेसिं । सुव्वइ बहुयाणं च्चिय, महव्वयारोवणं समये ॥१॥"

परिहारोऽपि गाथयैव—

"महव्वयसब्भावो वि य, चरणपरिणामसंभवो तेसिं । न बहुगुणाणंपि जहा, केवलसंभूतिपरिणामो ॥२॥"

सर्वस्तोका मूलगुणप्रत्याख्यानिनो [1]असंख्येयगुणाः [2]संमूर्च्छिममनुष्यैः सह ग्राह्याः ।

---

टी०—१ पु० मद्दुःखिनो दुःख ।

टी०—१ पु० तत्र उत्तरगुणप्रत्याख्यानिनः श्रावकाः ।

२ पु० अप्रत्याख्यानितः शेषास्त्वनन्तगुणाः मनुष्यसूत्रे अप्रत्याख्यानितोऽसंख्येयगुणाः ।

॥ इति सप्तमशते द्वितीयोद्देशः ॥

॥ अथ सप्तमशते तृतीयोद्देशः ॥

मूलामूलजीवस्पृष्टाः परस्परं संश्लिष्टाः परस्परं संश्लेषादाहारयन्ति पद्मिनीपत्रवत् आलुकं णीहुव्वहा । 'कण्हलेसे नेरइए अप्पकम्मतराए, णीललेसे णेरतिए महाकम्मतराए' कथमेतदुच्यते—सप्तमपृथिवीनारकः कृष्णलेश्योऽल्पकर्मा व्यपदिश्यते इति कर्म्मप्रत्यया वेदना, नोकर्मप्रत्यया निर्जरा । नारका अव्यवच्छित्तिनयमङ्गीकृत्य शाश्वता इति आख्यायन्ते, एक्केक्कं प्रत्यशाश्वताः । ॥ इति सप्तमशते तृतीयोद्देशकः ॥

+अथ सप्तमशते षष्ठोद्देशकः—

*अत्थि णं भंते ! जीवा णं कक्कसवेयणिज्जा कम्मा कज्जंति ?*

कर्कशम्—दुःखं रौद्रं प्राणात्ययकारि स्कन्दकानगारस्यैव निदर्शनम् ।

॥ इति सप्तमशते षष्ठोद्देशः ॥

---

+ चतुर्थपञ्चमोद्देशकोपरि चूर्णिर्नास्ति ।

## अथ सप्तमशते सप्तमोद्देशः—

क्षीणभोगी–क्षीणतनुदुर्बल इति । यावत् अकामनिकरणं वेदनं वेदेंति, अज्ञानप्रत्ययं च प्रभू–प्रभवः–शक्ता इति यावत् शक्नुवन्तोऽपि द्रष्टुं न पश्यन्ति 'पकामकरण'–प्रकामं–निश्चयेन कर्त्तुमशक्तम् ।

॥ इति सप्तमशतके सप्तमोद्देशः ॥

## अथ सप्तमशते अष्टमोद्देशः—

'परन्तं परवस' इति यावत् । ॥ इति सप्तमशते अष्टमोद्देशः ॥

## अथ सप्तमशते नवमोद्देशः—

वज्जी विदेहपुत्तो कुणिकः इन्द्रश्च, द्वौ जेतारौ नान्यौ, ओसन्नं–प्रायसः चतुरश्च युक्तः चतुर्घ्णः महाशिलाकण्टकः, तृणशूकेनाप्याहन्यमानस्य महाशिलाकण्टको नैव पातितस्य वेदनोपजायते ।

॥ इति सप्तमशते नवमोद्देशः+ ॥

॥ इति परिसमाप्तं सप्तमशतम् ॥

---

+ दशमोद्देशे किमपि न लिख्यते ।

## ॥ अथाष्टमशतम् ॥

### अथाष्टमशते प्रथमोद्देशः—

नारकदेवानामौदारिकं नास्ति नारकदेवानां वैक्रियं च तन्मिश्रं च इति यावत् । *पर्याप्तिः* कार्मणशरीरस्य ।

### ॥ इति अष्टमशते प्रथमोद्देशः ॥

### अथाष्टमशते द्वितीयोद्देशः—

*'जइ देवकम्मासिविस'* इत्यादि मनुष्यस्तिर्यक् तु आसीविषः सन् देवत्वेनोत्पन्नः स चानुभूतभावत्वादेवापर्याप्तक आशीविष उच्यते । नारका ये सम्यग्दृष्टयते ज्ञानिनः, मिथ्यादृष्टयोऽज्ञानिनः, नारकाऽपर्याप्तकानामज्ञाने द्वे भवतः कथम् ? असंज्ञिनो ये समुत्पद्यन्ते तेषां विभङ्गज्ञानाऽभावादपर्याप्तकावस्थायामज्ञानद्वयमेव । *निरयगतीयाणमित्यादि'* नरकगतिं यास्यन्ति ये ते नरकगतिकाः । सम्यग्दृष्टयो मिथ्यादृष्टयो वा ज्ञानिनो अज्ञानिनो वा नरकगतावुत्पत्तुकामा न तावतः नारकाः भवन्ति, वेयंति—अन्तरगतौ वर्त्तमानागतिग्रहणस्येदं प्रयोजनं तिर्यग्गतिं यास्यन्ति, ये सम्यग्दृष्टयस्तेषामवधिज्ञाने प्रतिपतिते उपपातः,—'तम्हा दो णाणा' । मिथ्यादृष्टिनामपि विभङ्गज्ञाने प्रतिपतिते उपपात इति–'दो अन्नाणा' । मनुष्यगतिं यास्यन्ति ये ते त्वाविज्ञाने अप्रतिपतिते गच्छन्ति यथा

भगवानेव सर्वार्थसिद्धात्, यः पुनरज्ञानी उत्पत्तुकामस्तस्य प्रतिपतिते उत्पातः। देवगतिका ये ज्ञानिनस्तेषामवविज्ञाने उत्पातः, अज्ञानिनां विभङ्गज्ञाने स्यात्, सेन्द्रिया–अज्ञानिनो ज्ञानिनश्च। ये ज्ञानिनः ते चतुर्ज्ञानिनः, केवलिनः अतीन्द्रियत्वात् एकज्ञानिनः। ये अज्ञानिनस्ते त्रिविधाः—एकेन्द्रिया मिथ्यादृष्टय इति। 'दो अण्णाणा', 'विगलिंदियाणं' दो णाणा सासायणे उप्पज्जतीत्ति काउं', घण्टालालादृष्टान्तेन, सो य सासायणो छावलित्तोत्ति छआवलियाओ जाव ताव दो णाणा लब्भंति, आदिल्ला पुनरज्ञानिन एव प्रायशः। अणिंदिया केवलिणो सकाइया केवलीवि। सकायो तमा पंच णाणा अण्णाणा तियं मिच्छादिट्ठिस्स। अकायिकः सिद्धः। बादरो केवली तम्हा पंच णाणा–मिथ्यादृष्टयः अज्ञानिन इति। नोसण्णी नोअसण्णी सिद्धः। तस्मात् केवलज्ञानी पर्याप्तककेवल्यपि तस्मात् पञ्चपर्याप्तकानां विकलेन्द्रियाणामज्ञानद्वयम्, तेषामेवापर्याप्तकानां षडावलीकसासादनत्वं[1]। यावच्च सासादनत्वं तावज्ज्ञानद्वयं लभ्यते इति। अपगते त्वज्ञानिन एव। पर्याप्तकमनुष्याणां केवलित्वे पर्याप्तः तस्मात् पञ्च, सम्यग्दृष्टिनारकस्य अपर्याप्तकस्य नियमात् ज्ञानत्रयम्। मिथ्यादृष्टिरविशुद्धतरस्स विभङ्गज्ञानी, सुविशुद्धो न भवति। विकलेन्द्रिया यदा अपर्याप्तकाः तदा सासादनत्वं लभ्यन्ते 'दो णाणा'। पञ्चेन्द्रियाणां पर्याप्तकानामवधिरिति कृत्वा अपर्याप्तकस्य 'दो णाणा'।

---

टी—१ पु० लभ्यते।

मनुष्याणामपर्याप्तकानां ज्ञानत्रयं सम्भवति, यथा भगवतः सर्वार्थसिद्धत्वात् । 'णो पज्जत्ता णो अपज्जत्ता' सिद्धस्य केवलज्ञानी । 'णिरय भवत्थाणं' नियमात् ज्ञानत्रयम् । मिथ्यादृष्टिर्विभङ्गज्ञानमुद्वर्त्तमानस्य प्रच्यवतस्तस्माद्-ज्ञानद्वयम् । देवानामपि यो मिथ्यादृष्टिस्तस्य प्रच्यवतः—च्यवमानस्य, केवल्यपि भव्य इति ज्ञानपञ्चकसम्भवः भव्यत्वेऽपि, यावत् सम्यक्त्वं न प्रतिपद्यते तावदज्ञानी असंज्ञिनः सम्यग्दृष्टेः ज्ञानद्वयम्, मिथ्यादृष्टेरज्ञानद्वयम् । संज्ञिनां यस्मात्केवली 'णोसण्णी णोअसण्णी' स्थित्वाऽसौ समयमुपस्थाप्यते मासिकं चतुर्लघ्वादि तपश्चरति यः स परिहारिक चारित्रलब्धिः । सा चरित्राचरित्रलब्धिः श्रावकाणाम् आभिनिबोधिकज्ञानलब्धिनां चत्वारि भजनया, केवलिनो नास्ति आभिनिबोधिकज्ञानमिति। तस्य लब्धिर्यदा मतिज्ञानस्य तदा अज्ञानी वा[1] यदा अज्ञानी तदा अज्ञानत्रयम् । एवं श्रुतमपि, अवधिज्ञानलब्धिकश्चतुर्ज्ञानी तस्याऽलब्धिकआभिनिबोधिक–श्रुत–मनःपर्यायकेवलज्ञानी स्यात्, यस्माद् विनोऽप्यवधिना मनःपर्यायज्ञानी [2]स्यादिति। केवली वा मनःपर्यायलब्धिकश्चतुर्ज्ञानी, तस्यालब्धिक[3] आभिनिबोधिक–श्रुत–मनःपर्याय-ज्ञानेन केवलं प्राप्नोति । केवलालब्धिको वा आद्यत्रयं लभते । मिथ्यादर्शनालब्धिकस्य नियमात् स सम्यग्दर्शन-

टी०—१ पु० केवलज्ञानी वा ।
२ पु० भवति ।
३ पु० केवलज्ञानी यस्माद्विनाऽपि मनःपर्यायज्ञानेन केवलमाप्नोति । आद्यत्रयं लभते ।

लब्धिः तस्य च ज्ञानपञ्चकसंभवः१ । तस्यालब्धौ मिथ्यादृष्टिः तदाज्ञानत्रयसंभवः । चारित्रलब्धिकस्य ज्ञानपञ्चकं यस्मात् केवल्यपि यथाख्यातचारित्रस्थः तस्यालब्धौ यथाख्याताभिधानस्य मनःपर्यायज्ञानं न भवति शेषत्रयं भवत्येव । सामायिकचारित्रलब्धिर्यस्य तस्य ज्ञानचतुष्कं तस्यालब्धिकस्य पञ्चज्ञानानि । कथं केवली न सामायिक-चारित्रस्थः । केवली च अवधिज्ञानं श्रावकस्यापि भवतीत्याद्यत्रयम्, उपरितनचारित्रेषु ज्ञानचतुष्कम्, यथाख्यात-चारित्रलब्धिक्षपकस्यानुत्पन्ने केवलज्ञाने आद्यचतुष्टयमुत्पन्ने त्वेकमेव केवलम् । अलब्धिकः पुनः सिद्धः केवलज्ञानी, अन्ये चाद्यचतुष्टयज्ञानिनः, अलब्ध्यतो अज्ञानी तदा अज्ञानत्रयम् चारित्राचारित्रलब्धिकानां–श्रावकाणां ज्ञानत्रयं संभवति, पण्डितवीर्यलब्धिः–साधुवीर्यलब्धिज्ञानी ज्ञानपञ्चकसंभवः, अलब्धिके श्रावकत्वं तदा अवधिज्ञानं संभवति मिथ्यात्वं वाऽलब्धिकस्य बालपण्डितः तेनोक्तम्—श्रावकत्वेन अज्ञानत्रयसंभवः अलब्धौ पण्डितत्वं । बालत्वं वा । यदा पण्डितत्वं तदा ज्ञानपञ्चकसंभवः । बालत्वे ज्ञानत्रयसंभवः । इन्द्रियलब्धित्वे ज्ञानचतुष्टयसंभवः अज्ञानत्रयस्य वा । अनिन्द्रियत्वात्केवलिनः पञ्चमं नास्ति, अलब्धौ तु कैवल्येव । श्रोत्रेन्द्रियलब्धिर्येषां तत्र चतुष्टयज्ञानसंभवः अज्ञानत्रयस्य वा केवल्यतीन्द्रिय इति न पञ्चमम् । अलब्धौ तु ज्ञानिनोऽप्यस्त्यज्ञानिनोऽपि–विकलेन्द्रिया

१ पु० दर्शनलब्धिकानां ज्ञानपञ्चकमज्ञानत्रयं यस्मात् दर्शनसामान्यात् सम्यग्दर्शनमिथ्यादर्शनपरिग्रहः तस्यालब्धिरेव नास्ति सम्यग्दर्शनलब्धिः यस्य ज्ञानपञ्चकसंभवः ।

द्विज्ञानिनः, केवली केवलज्ञानी, अज्ञानिनो वा मिथ्यादृष्टयो विकलाः । चक्षुरिन्द्रियलब्धिर्येषां तेषां ज्ञानचतुष्टयं नात्र विचार्यते, श्रोत्रेन्द्रियं किमस्ति नास्तीति अविशेषात् । श्रोत्रेन्द्रियं गृहीतमेवेति ज्ञानचतुष्टयं संभवति अज्ञानत्रयं वा, केवली अतीन्द्रिय इति न पञ्चमम् । अलब्धौ ज्ञानिनोऽप्यस्त्यज्ञानिनोऽपि केवलिनोऽतीन्द्रियाः । अलब्धौ त्रीन्द्रिय आपद्यते तदा सासादनावस्थायामपर्याप्तकस्य ज्ञानद्वयम्, परतः अज्ञानी एव नेयः ।

साकारोपयोगस्थानां ज्ञानपञ्चकसंभवः अज्ञानत्रयस्य वा यस्य यस्मात् पृथिव्यादीनामपि भवति । एवमनाकारः—सयोगिनः ज्ञानपंचकसंभवः यस्मात् केवल्यपि, वाक्काययोगिमिथ्यादृष्टिनां सयोगित्वेनाज्ञानत्रयम्, अयोगिकेवली सिद्धश्च—तौ एकज्ञानिनौ ।

सलेश्यानां पंचज्ञानसंभवः अज्ञानत्रयस्य वा यस्मात् केवल्यपि सशुक्ललेश्यः । अलेश्यः सिद्धः स एकज्ञानी । सकषायिणश्चत्वारि ज्ञानानि अज्ञानत्रयं वा संभवति । अकषायस्य ज्ञानपंचकं यस्मात् क्षपकोऽप्यकषायः अनुत्पन्ने केवले तस्याद्यं चतुष्टयं, केवलिनः पञ्चमम् । अवेदकस्य ज्ञानपञ्चकसंभवः यस्मात्क्षपकोऽप्यनुत्पन्नज्ञानी अवेदकस्तस्य चत्वारि ज्ञानानि, केवलिनः पञ्चमम् ।

आहारकस्य पञ्चसंभवः यस्मात् केवल्यपि आहारकः । अनाहारकस्य मनःपर्यायज्ञानं नास्ति, आद्यं त्रयं

विद्यते अथमज्ञानं वा सम्यग्दृष्टेर्देवगतिमुपपद्यमानस्य विग्रहगतस्य अनाहारकस्य वा सिद्धस्य केवलज्ञानमतीतमेकं लिख्यते ।

"बालवीरियलद्धियाणं तिन्नि णाणा तिन्नि णाणा भयणाए तिन्नि णाणा तिन्नि णातिं अन्नजयदिट्ठिमवि दिव्व भण्णति ।"

## ॥ इति अष्टमशते द्वितीयोद्देशः ॥

## अथ अष्टमशते तृतीयोद्देशः—

गोवा[1] गोवावलिया गोवा गोवावलिया [गो]वा पंक्तिः । 'कति णं भंते पुढवीए पण्णत्ताओ' इत्यादि चरमपदं निरवसेसं भणियव्वं, गाथाद्वयं चेदमनुसर्त्तव्यम्,—

"किह होंति समहियातिं, (चरिमा) चरिमप्प एसरासीतो । दव्वातिं कह भुज्जति, दव्वुप्पचयारोपदेसेसु ॥१॥
उज्जुसुयातिमियमिदं, परिप्पदेसमिह दव्वपडिवत्ति । देसपदेसमेदो जह वा धम्मत्थियातीणं ॥२॥

## ॥ इति अष्टमशते तृतीयोद्देशः ॥

टी०—१ मू० भ० गोद्दे गोवावलिया इत्यादिपाठः ।

## अथ अष्टमशते चतुर्थोद्देशः—

"कति णं भंते ! किरियाओ पण्णत्ताओ" इत्यादि एतद्व्याख्यानार्थं गाथाद्वयं लिख्यते—

"मिच्छापच्चक्खाणे, परिग्गहारंभमायकिरियाओ । कमसो मिच्छा अविरय-देसपमत्तप्पमत्ताणं ॥१॥
मिच्छत्तवत्तियाओ, मिच्छद्दिट्ठीणं चेव तो थोवा । सेसाणं एक्केक्को, वड्ढइ रासी तओ अहिया ॥२॥

## ॥ इति अष्टमशते चतुर्थोद्देशः ॥

卐

## अथ अष्टमशते पञ्चमोद्देशः—

प्रत्याख्याते तद्भाण्डं भवत्यामं जायया संभवि अभिचरति पूर्वमेव प्रत्याख्याते पुनरपि चातुर्मासिकादौ त्रिधा त्रिधा प्रत्याख्याते पश्चादन्यप्रकारं प्रत्याख्यानम्, 'साडीकम्मे' स्वकीयमेव भाण्डं नीत्वा सर्द्धि करोति-विक्रीणीते । 'भाडीकम्मं'—भाटकेनाऽन्यदीयद्रव्यं नयति, 'फोडीकम्मं'—हतलादि(?) लाक्षामुत्पत्तिस्थानाद् गृहीत्वा विक्रीणीते, 'केसवाणिज्जं'—गोमहिषां स्त्रीविक्रयः, हस्तिदन्तादिविक्रये—'दंतवाणिज्जं' भिज्जविक्रयः 'विसवाणिज्जं' त्रिषविक्रयः, तिलेषु—यन्त्रकर्म, निलञ्छनकर्म—लघुबलीवर्दानामलनेनाऽपात्रिकाऽपनयनम्, दवाग्निदानम्, असतीपोषणता—

द्व्यक्षरिकादिपोषणनरूपकमागग्रहणम्, तडागमङ्ग घा(म० पु०)रिण्यादिभिर्वा परिशोषणकर्म ।

॥ इति अष्टमशते पञ्चद्देमोशः ॥

卐

## अथाष्टमशते षष्ठोद्देशः—

'थेरा यसेसुव्वा सेव अमुहासिया' अनुभूतवाचः । 'जोइसिया ते' द्युतिर्ज्वलति किं शेषाणाम् अगारदाहे मल्लगा कुड्यावष्टम्भनं द्रव्यम् । 'ओरालियसरीराउय' यस्मादौदारिकशरीरेण प्राणातिपातं कुरुते तस्मात् ३-४-५ । नारको यस्मात् पृथिव्यादि विनाशयति तदौदारिकात् ३-४-५ । वैक्रियशरीरनिमित्तं बहवो क्रिया नैव विनाशयितुं शक्नुवन्ति । तेथाकम्मविडब्बिएसु उद्दवणा णत्थि ।

॥ इति अष्टमशते षष्ठोद्देशः ॥

## अथाष्टमशते सप्तमोद्देशः—

'देसं देसेण वयामो [पएसं] पदेसेण वयामो' अचित्तेन देशप्रदेशेन गच्छामः, देशो महान्, प्रदेशोऽल्पः, तौ द्वावपि निरीक्ष्यमाणौ व्रजामः । ॥ इति अष्टमशते सप्तमोद्देशः ॥

## अथाष्टमशते अष्टमोद्देशः—

'इत्थीपच्छाकडे' स्त्रीत्वं पश्चात्कृतं। यदुक्तम्—स्त्रीयमासीत् यस्य स बध्नाति, तं भंते! किं बंधति, बंधिस्सति भवाकरिसं पडुच्च बंधी वा स्यात्? पूर्वभवे उपशमकत्वे इर्यापथं कर्म इह च भवे उपशमकत्वे न बध्नाति अनागते च काले भन्त्स्यति भवन्नुपशमकः *द्वितीयः*। प्रथमभवे क्षपकत्वमाप्तः स च पूर्वभवे उपशमकत्वे बद्धवान् वर्त्तमाने बध्नाति शैलेश्यवस्थायां [1]न च पुनर्भन्त्स्यति *तृतीयः*। पूर्वजन्मनि उपशामकत्वे बद्धवान् प्रतिपतितो न बध्नाति, पुनर्यदा प्रतिपत्स्यते तन्त्स्यति *चतुर्थः* शैलेशीं बद्धवान् [2]नाधुना बध्नाति, न च पुनर्भन्त्स्यति, न लब्धमुपशमकत्वं पूर्वजन्मनीति न बद्धवान्, अधुना लब्धमिति बध्नाति, पुनरप्येष्यत्काले भन्त्स्यति, न क्षपकत्वं नवोपशमकत्वं, पूर्वजन्मनि लब्धवान् तेन न बन्धी क्षपकत्वं प्रथममेवाधुना लब्धमिति बध्नाति, शैलेश्यवस्थायां न पुनर्भन्त्स्यति [६] *सप्तमभङ्गः* भव्यस्य, भव्यो यदा तदा भन्त्स्यति, *अभव्यस्याष्टमः*।

'गहणागरिसं' यद्भवे बंधेत्तो उपशमकश्च यदा बध्नाति तदा बद्धवानप्यतीतकाले पुनश्चैव भन्त्स्यति, *द्वितीयः*-क्षपकः बद्धवान् बध्नाति शैलेश्यवस्थायां न पुनर्भन्त्स्यति, *तृतीयः* उपशमकत्वे बद्धवान् प्रतिपतितो न बध्नाति पुनस्तत्रैव भवे उपशमकश्रेणिप्रतिपन्नो भन्त्स्यति एकभवे उपशमश्रेणिद्वयं प्राप्यते एवेति३। चतुर्थः—

टी०—१ पु० शैलेश्यवस्थायां। २ पु० पूर्वकाले बद्धवान्।

'सेलेसिणो पुव्वकाले खवणावस्था जा' तत्र बद्धवान् शैलेश्यवस्थायां न बध्नाति न च भन्त्स्यति४ । पञ्चमः— पुनरायुषः पूर्वकाले उपशमकत्वं न लब्धवान् इति 'ण बंधी' अधुना लब्धमिति बध्नाति एष्यत्काले न पुनर्भन्त्स्यति५ । षष्ठो नास्ति—बद्धस्य कर्मणोऽवश्यं वेदनाऽपि भावनीयमिति६ । भव्यस्य सप्तमः । अभव्यस्याष्टमः । नहि शरीरदेशेन कर्मणो देशो बध्यते, किं तर्हि ? सर्वात्मना सर्वमेव बध्यते ।

परीषहविचारे अमूभिर्गाथाभिर्विचार्यम्—

"मोहनिमित्ता अट्ठवि, बायररागे परीसहा किह णु? । किह वा सुहुमसरागे, न होंति उवसामए सव्वे ॥१॥

सत्तय परतोच्चिय, जेण बायरो जं च सावसेसंमि । मग्गिल्लंमि पुरिल्ले, लब्भति तो दंसणस्सावि ॥२॥

लब्भति पदेसकम्मं, पडुच्च सुहुमोदतो ततो अट्ठ । तस्स भणिया ण सुहुमे, ण तस्स सुहुमोदओ वि जतो ॥३॥

॥ इति अष्टमशते अष्टमोद्देशः ॥

卐

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| बंधी | बंधति | बंधिस्सति | केवली | ण बंधी | बंधति | बंधिस्सति | खवग | एते |
| बंधी | बंधति | बंधिस्सति | सेलेसी | ण बंधी | बंधति | ण बंधिस्सति | गुणा | गहणा |
| बंधी | बंधति | बंधिस्सति | उवसा० | ण बंधी | ण बंधति | बंधिस्सति | लवितो | गरिमा |
| बंधी | बंधति | बंधिस्सति | सेलेसिं | ण बंधी | ण बंधति | ण बंधिस्सति | अलवितो | |

| | | | | | |
|---|---|---|---|---|---|
| बंधी | बंधति | बंधिस्सति | उवसामतो | ण बंधी | बंधति |
| बंधी | बंधति | ण बंधिस्सति | खवगो | ण बंधी | बंधति |
| बंधी | ण बंधति | बंधिस्सति | उवसामतो | ण बंधी | ण बंधति |
| बंधी | ण बधति | ण बंधिस्सति | सेलेसी | ण बंधी | ण बंधति |

देशेन कर्मणो देशो बध्यते किं तर्हि सर्वात्मना सर्वमेव बध्यते । अपगतवेदः पुरुषवेदेक्षपिते

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| बंधिस्सति<br>ण बंधिस्सति<br>बंधिस्सति<br>ण बंधिस्सति | उवसामतो<br>खवगो<br>उवसामतो<br>सेलेसो | ण बंधी<br>ण बंधी<br>ण बंधी<br>ण बंधी | बंधति<br>बंधति<br>बंधति<br>बंधति | बंधिस्सति<br>ण बंधिस्सति<br>बंधिस्सति<br>ण बंधिस्सति | उवसामतो<br>केवली<br>भवितो<br>अभवितो | भवाग रिस | पढमे उवसामतो | बितिय खवगो |

| | | | | | | |
|---|---|---|---|---|---|---|
| तितिते उवसामतो | चउत्थे सिद्ध | पंचमे उवसामतो | छट्ठे खवगो | सत्तमे भवितो | अट्ठमे अखिज्ज-माणो | सत्यपरिवध्नाति कियन्तमपि कालं सांपरायिकं तेनापगतवेदो बध्नाति अणातीतं |

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| एसो भावो गरिसो | पढमे केवली उवसामउ खवउ | वितिए केवली | ततिए उवसामतो | चउत्थे सिद्ध सेलेसी | पंचमे उवसामग खवग | छट्ठे सुण्ण | सत्तमेन कालमवि उवसामग खवगो | अट्ठमे अमोक्खी गहणा कपोग तवेतो | |
| | | पंचमे | छट्ठो | सत्तमो | अट्ठमो | संपरायंवि | | | |

| | | | | | |
|---|---|---|---|---|---|
| रियावव तयागओ | वपढम उवसामगो खवगो अइक्खय संपत्तो सव्वे दोवरिम वट्टमाणो | वितिते खवओ अइक्खाया संपत्तो | ततितो उवसामतो | | सपज्जवसियं भव्वस्स अणाति अपज्जवसियं अभव्वस्स |

## अथाष्टमशतके नवमोद्देशः—

परमाणुर्द्विप्रदेशिकादिः तत्सम्बन्धो जीवप्रयोगे बन्धः 'अट्ठण्हं जीवमज्झप्पएसाणं अणादीए अपज्जवसिए' अस्य जीवस्य असंख्येयप्रदेशिकस्य अष्टौ मध्यप्रदेशास्तेषां अनादिरपर्यवसितो बन्धः, यदपि लोकं व्याप्य तिष्ठति जीवः, तत्स्थापना— 

एषामुपरि चत्वारि एतेऽष्टौ । त्रयोरधस्त्रयोरुपरि द्वयोर्विसरणमपि कदाचित् । षण्णां यावत् केचिदेकैकं विसारयति अन्यदा कदाचित् मन्थान्तराणि कुर्वन् विसृजति एषोऽनाद्यपर्यवसितः । अपरे त्वाहुः—लोकव्यापिकाले तानष्टौ प्रदेशान् व्यवस्थाप्य कचके ? शेषं कं चाकाशे खं प्रदेशसमूहं विसृजति 'तत्थ वि तिण्हं अणादीए' तत्रापि अबन्धः अनादिरपर्यवसितः, उच्चयबन्धः राशीकृतः परस्परलग्नबन्धः, संहननबन्धः केवलिसमुद्घातान्निवर्त्तमानः, पञ्चमे मन्थान्तरोपसंहारं कुर्वन्, अत्र तैजसकार्मणः शरीरसंघातं जीवप्रदेशोपघातसहचरितमारभते अयं च नान्येषु भवेषु अभूदिति तेन प्रत्युत्पन्नो बंधः, शरीराप्रयोगाबन्धः 'वीरिय सजोगिसद्दव्वयाए' वीर्यं नाम जीवपुद्गलाना-मङ्गाङ्गीभावगता शक्तिः, योगा मन आद्यः तदेव सत्, सच तद्द्रव्यं च सद्द्रव्यं, तद्भावः सद्द्रव्यता, वीर्य-सयोगिसद्द्रव्यता, औरालियशरीरप्पयोगबंधो जहण्णो एगसमतियो, देसबंधो वाक्काइय वेउव्विए एगसमयागयमरणे

उरालियसरीरसव्ववंधो वि' यथा अपूपः प्रथमसमयप्रक्षिप्तो घृतादि गृह्णाति शेषेषु समयेषु गृह्णाति विसृजति च एवमयमौदारिकशरीरी यदा शरीरकं विहाय प्राक्तनं इदानीमन्य[त्] गृह्णाति तदा प्रथमसमये औदारिकशरीर-ग्रहणयोग्यान् पुद्गलान् तस्मिन् स्थाने सर्वान् गृह्णाति, ततः परं गृह्णाति च विसृजति च, तस्मादौदारिकशरीरिणां सर्वदेशबन्धः इयमपि विद्यते प्रथमसमये सर्वबन्धः, उत्तरसमयेषु देशबन्ध इति, उरालियसरीरप्पयोगबंधेणं कालतो केवचिरं होति ? सव्वबंधो एगसमयं देसबंधो जहण्णमेगसमइयं भाव्यते । पञ्चेन्द्रियशरीरायुर्वा औदारिकशरीरी सन् यदा वैक्रियं प्रतिपन्नस्तद्विमुच्य यदा पुनरौदारिकं गृह्णाति तदा प्रथमसर्वबन्धं कृत्वा द्वितीयसमये देशबन्धको भूत्वा म्रियते यदा तदा देशबन्धकस्य जघन्यत एकसमयः । 'उक्कोसेणं तिन्नि पलितोवमाइं' कथम् ? यस्मादौदारिकशरीरिणां त्रिपल्योपमा स्थितिः, तेषु च त्रिपल्योपमेषु प्रथमसमये सर्वबन्धक१ एवेति, 'एगिंदिय ओरालियसव्वबंधं एगं समयं देसबंधो, जहन्नेणं एगं समयं' कथम् ? वायोरौदारिकशरीरिणो वैक्रियं गतस्य पुनरौदारिकप्रतिपत्तौ सर्वबन्धको भूत्वा देशबन्धकश्चैकं समयं भूत्वा म्रियते यदा, तदा देशबन्धः, जहन्नेणं समयं, पृथिवीकायिकं प्रति यस्मादेकेन्द्रियाणामियं जघन्या स्थितिः 'उक्कोसेणं बावीसं वाससहस्साइं

टी०—१ पु० समयान्न्यूनानि त्रीणि पल्योपमानि परतो यदि देवेषु उत्पद्यते तदा वैक्रियशरीरस्य सर्वबन्धको भवत्यादौ यदापि औदारिकशरीरस्वेनोत्पद्यते तदा सर्वबन्धक एवेति ।

समयऊणाइं' स हि प्रथमसमये सर्वबन्धकः, शेषकाले देशबन्धक एव, तेन सर्वबन्धकसमयेन न्यूनानि द्वाविंशति-वर्षसहस्राणि २२००० । पुढवीकाइया देसजहन्नेणं तिसमयहीणं[1] सर्वसत्त्वैः क्षुल्लकभवग्रहणं[2] निरूप्यते गाथाभिः—

दोन्नि सयाई णियमा, छप्पन्नाति पमाणतो होंति । आवलियपमाणेणं, खुड्डाभवग्गहणं नेयं ॥१॥

पणसट्ठिसहस्साति, पंचेव सया हवंति छत्तीसा । खुड्डागभवग्गहणे, हवंति अंतोमुहुत्तेण ॥२॥

सत्तरस भवग्गहणा, खुडगा होंति आणुपाणंमि । तेरस चेव सयाइं, पंचाणउयाइं अंसाणं ॥३॥

स च पृथिवीकायिकस्त्रिसमयेन विग्रहेणागतस्तृतीयसमये सर्वबन्धकः, शेषेषु देशबन्धको भूत्वाऽऽक्षुल्लकभव-ग्रहणं मृतः सन् पुनरपि [ वि ]ग्रहेणागतो यदा, तदा सर्वबन्ध एव भवतीति, एवं कृत्वा ये ते विग्रहसमयास्त्रयः, तैस्त्रिभिरूनं क्षुल्लकमित्युच्यते । उक्कोसेणं २२००० इत्येतेषां स्थितिः, प्रथमसमये सर्वबन्धस्तेनोनानि इति कृत्वोच्यते एवमष्ट [3]नश्यति, तेजसा स्वस्थित्या विभावनीयम्, वायोर्देशबन्धः जहन्नेणं एक्कं समय, वायुरौदारिकशरीरी भवन् वैक्रियतां प्रतिपन्नः पुनरौदारिकप्रतिपत्तौ प्रथमसमये सर्वबन्धस्तेनोनानीति कृत्वोच्यते, द्वितीये देशबन्धको भूत्वा म्रियते यदा तदा देशबन्धो जघन्यत एकसमयम् उत्कृष्टतः स्वस्थितिः सर्वबन्धसमयोना एवं विकलेन्द्रिया-णामपि स्वस्थित्या भावनीयम्, जघन्यस्थितिस्त्रिविग्रहसमया कार्या, उत्कृष्टस्थितिरविग्रहा कार्या, तेन प्रथमसमये

टी०—१ पु० तिसमयणं सव्वैः । २—पु० जघन्यतो जीवनीयं तच्च क्षुल्लकभवग्रहणं । टी०—३ पु० नशाति ।

सर्वबन्ध एव, तेन सर्वबन्धसमयेन, या यस्य स्थितिः, सा ऊना करणीया, जघन्यस्थितिः पुनः त्रिभिर्विग्रहसमयैरूना कार्या, पञ्चेन्द्रियस्तिर्यग्योनिसत्त्वः, औदारिकशरीरी भवन्, यदा वैक्रियप्रतिपन्नः पुनर्यदौदारिकं संक्रामति, तदा सर्वबन्धकः प्रथमसमये, द्वितीये देशबन्धको भूत्वा म्रियते यदा, तदा जघन्यत एकं समयं देशबन्धकः, उत्क[र्षतः] तिन्नि पलियं इयत्येव येषां स्थितिरिति कृत्वा, यदा न वैक्रियं प्रतिपद्यते, [1]नवा लब्धिरस्ति[1] तदा सर्वबन्धसमयोना इयं देशबन्धः, एवमेव मनुष्याः ।

*अन्तरमिदानीं चिन्त्यते*—औदारिकशरीरिणां सर्वबन्धान्तरं जघन्यतः क्षुल्लकत्रिसमयोनं कथंत्रिसमयोनम् ? विग्रहेणागतस्तत्र द्वौ समयावनाहारकः तृतीयसमये सर्वबन्धकः, क्षुल्लकभवं स्थित्वा मृतः, प्रथमसमये सर्वबन्धकः, एवं सर्वबन्धकस्य सर्वबन्धकस्य चान्तर क्षुल्लकभवस्त्रिविधः[वि]ग्रहसमयोनः, 'उक्कोसतेत्तीसं पुव्वकोडिसमयाहियाइं' । कथम् ?—अविग्रहेणागतः प्रथमसमये चैव सर्वबन्धकः, पूर्वकोटिं स्थित्वा त्रयस्त्रिंशत्सागरोपमा स्थितिर्नारकः सर्वार्थसिद्धको वा भूत्वा त्रिसमयेन विग्रहेण द्वौ समयावनाहारकस्तृतीयसमये सर्वबन्धकः, औदारिकशरीरस्य यौ तौ द्वावनाहारकसमयौ तयोरेकसमयः पूर्वकोटौ सर्वबन्धसमयस्थाने क्षिप्तः शेषान्तराले सर्वबन्धयोरेकसमयोऽतिरिक्तस्तेनाभिधीयते 'तेत्तीसा सा पुव्वकोडिसमयाहियात्ति । 'देशबंधतो जहन्नेणं एगं समयं' कथम् ?—देशबन्धको मृतः

1—पु० नवा लब्धिः प्रतिपद्यते ।

अविग्रहेणैव प्रथमसमये सर्वबन्धकः द्वितीयसमये देशबन्धकः सर्वबन्धकसमयान्तराले एकः तेनोक्तं जघन्यत एकम्, 'एको तेत्तीसं सातिसमयाहियाइं' देशबन्धको मृतः उत्पन्नः सर्वार्थसिद्धं प्रत्यागतः विग्रहगत्या समयेनाऽहारकः तृतीये सर्वबन्धकः ततो देशबन्धकः एवमन्तरालं देशबन्धकस्य उत्कृष्टं त्रयस्त्रिंशत्सागरोपमाणि त्रिसमयाधिकानि। 'एगेंदिय' इत्यादि—जघन्यत एकेन्द्रियौदारिकसर्वबन्धान्तरं क्षुल्लक[भव] त्रिसमयोनं[2] विग्रहगत्या आगत्या आगतः समयद्वयमनाहारकः ततः क्षुल्लकं भवग्रहणं त्रिसमयोनं स्थित्वा मृतः अविग्रहगत्या यदा, तदा पुनः सर्वबन्धक एवेति, 'उक्कोसेणं बावीसवाससमयाहियाइं,' कथम्?—अविग्रहेणागतः प्रथमसमये सर्वबन्धकः, ततो[3] द्वाविंशति-वर्षसहस्रेषु समयोनेषु प्रक्षिप्तः पूरणार्थे शेष एकः सर्वबन्धान्तराले, समयस्थितिश्च २२००० वर्षाणि। देशबन्धान्तरं जहन्नेणं एगं, स कथम्? देशबन्धको मृतः अविग्रहेण पुनः सर्वबन्धको भूत्वा एकस्मिन् समये पुनर्देशबन्धक एवेति एकसमयः 'उक्कोसं अंतमुहुत्तं' कथम्?—वायुरौदारिकशरीरी वैक्रियं गतस्तत्रान्तर्मुहूर्त्तं वैक्रियत्वे स्थित्वा पुनरौदारिकशरीरस्य सर्वबन्धको भूत्वा देशबन्धक एवेति, देशबन्धकस्य अन्तर्मुहूर्त्तमन्तराले पृथिवीकायिकानां सर्वबन्धान्तरं तथैव देशबन्धान्तरं 'जहन्नं एक्कं समयं उक्कोसं तिन्नि समया' देशबन्धको मृतः विग्रहगत्या समय-

टी०—१ पु० समयद्वयेना। २ पु० न। ३-पु० द्वाविंशतिवर्षसहस्राणि त्रिसमयोनानि पुनर्विग्रहगत्या त्रिसमयया अन्येषु औदारिकेषु उत्पन्नः तत्र समयद्वयमनाहारको भूत्वा तृ[तीय] समये सर्वबन्धकः तयोर्द्वयोरेकः।

द्वयमनाहारकस्तृतीयसमये सर्वबन्धकस्ततो देशबन्धकः, एवमिदं समयत्रयमन्तराले देशबन्धकस्य अनेनोपायेन एवं विभावनीयम् । जावपंचेंदियतिरिक्खजोणियाए । 'तेसिं देसबंधांतरं जहन्नं' देशबन्धको मृतः सन्नविग्रहगत्या सर्व-बन्धकः पुनर्देशबन्धक एवेति । उत्कृष्टेन पुनरौदारिकशरीरवत्, वैक्रियतां[1] योऽसावन्तर्मुहूर्त्तं इति । एवं मनुष्याणा-मपि । 'जीवस्स णं भंते ! एगिंदियत्ते णो एगिंदियत्ते पुणरवि एगिंदियत्ते बंधंतरं कालओ' एकेन्द्रियो विग्रहगत्या समयद्वयमनाहारको भूत्वा तृतीयसमये सर्वबन्धकः, एवं कृत्वा सर्वबन्धकः भवान्तराले क्षुल्लकभवद्वयं आद्यैस्त्रिभिः समयैरूनम् । उत्कृष्टा स्थितिराद्यया ग्राह्या । देशबन्धान्तरं देशबन्धको मृतः एकेन्द्रियो द्वीन्द्रियभवे स क्षुल्लक-भवमनुभूयाऽविग्रहगत्या प्रथमसमये सर्वबन्धको भूत्वा द्वितीये देशबन्धकः । एवं देशबन्धान्तराले क्षुल्लकभवः स सर्वबन्धसमयातिरिक्तः । उत्कृष्टा स्थितिराद्यया ग्राह्या, सर्वस्तोका औदारिकशरीरस्य सर्वबन्धकाः यदुक्तमुत्पद्य-मानकाः । अबन्धकाः सिद्धास्ते विशेषातिरिक्ताः । देशबन्धकाः असंख्यातगुणाः यस्मात्पूर्वोत्पन्ना बहुतराः उत्पद्यमानकेभ्यः ।

टी०—१ पु० 'प्रतिपन्नः' तत्रान्तर्मुहूर्त्तं स्थित्वा पुनर्विनिमुच्य तत्प्रथमसमये औदारिकशरीरस्य सर्वबन्धकः ततो देशबन्धक एवेति एवं देशबन्धकस्यान्तरं वैक्रियतायां' इत्यधिकः ।

वैक्रियशरीरप्रयोगबन्धः कियन्तं कालमित्युच्यते—सर्वबन्धक एव एकसमयं जघन्यतः। 'उक्कोसा दो समया' कथम् ?—औदारिकशरीरी वैक्रियतां प्रतिपद्यमानः सर्वबन्धको भूत्वा वैक्रियत्वे मृतः पुनर्नारकत्वं देवत्वं वा यदा प्राप्नोति तदा प्रथमसमये वैक्रियशरीरस्य सर्वबन्धक एव, इति कृत्वा वैक्रियशरीरस्य सर्वबन्धकः समयद्वयमुत्कृष्टतः। देशबन्धकः—'जहन्नेणं एक्कं समयं', कथम् ? औदारिकशरीरी वैक्रियतां प्रतिपद्यमानः प्रथमसमये सर्वबन्धको द्वितीयसमये देशबन्धको भूत्वा मृतः इत्येवं जघन्यत एकसमयम्, 'उक्कोसं तेत्तीसं' स देवेषु नारकेषु चोत्पद्यमानः प्रथमसमये सर्वबन्धकः वैक्रियशरीरस्य, ततः परं देशबन्धकः तेन सर्वबन्धकसमयेनोनानि त्रयस्त्रिंशत्सागरोपमाणि उत्कर्षतः। 'वाउक्काये'त्यादि वायुरौदारिकशरीरी भवन् वैक्रियं गतः, ततः प्रथमसमये सर्वबन्धकः द्वितीये समये देशबन्धको भूत्वा मृतः जघन्येन एको देशबन्धसमयः। 'उक्कोसं अंतोमुहुत्तं' कथम् ? वैक्रियशरीरेण स एव यदा अन्तर्मुहूर्त्तमात्रमास्ते वैक्रियशरीरी, परतोऽन्तर्मुहूर्त्तस्य नैव वैक्रियशरीरेणास्ते, पुनरौदारिकमेव प्रतिपद्यते इति।

'रयणप्पभे'त्यादि रत्नप्रभानारकः सर्वबन्धकः समयः, देशबन्धो दशवर्षसहस्राणि त्रिसमयोनानि, कथम् ? विग्रहगत्या उत्पन्नः उत्पन्नः द्वितीयसमयमनाहारकः तृतीये सर्वबन्धकः आयुःशेषं देशबन्धको वैक्रियस्य तदेवायुराद्यैस्त्रिभिः समयैरूनं। 'उक्कोसेणं सागरोवमं समयऊणं' त्ति कथम् ? अविग्रहगत्या प्रथमसमये सर्वबन्धकः तेन सर्वबन्धकसमयेनोनानि। कथं ? विग्रहगत्यां ३३ सागरोपमाणि एवमनेन प्रयोगेण। जघन्यस्थितौ त्रिसमयोऽविग्रहः कार्य

इति । त्रिसमयोना क्रियते, उत्कृष्टा स्थितिरविग्रहा कार्या इति एकसमयोना । वैक्रियबन्धान्तरमेकसमयं कथम् ? औदारिकशरीरी वैक्रियं गतः प्रथमसमये सर्वबन्धको द्वितीये देशबन्धको भूत्वा मृतः देवेषु नारकेषु वा वैक्रियशरीरेषूत्पद्यमानस्य प्रथमसमये सर्वबन्धकः द्वितीये देशबन्धक एव । एवं देशबन्धकयोरन्तराले सर्वबन्धकसमयः । कदाचित्पुनरौदारिकशरीरी वैक्रियमापन्नः सर्वबन्धकाद् देशबन्धको भूत्वा मृतोऽनन्तकालमौदारिकशरीरिषु वनस्पत्यादिषु तिष्ठति ।



वायुरौदारिकशरीरी वैक्रियमापन्नः प्रथमसमये सर्वबन्धक एव भूत्वा मृतः पुनर्वायुरेव जातः, तस्य चाऽपर्याप्तकस्य वैक्रियशक्तिर्नाविर्भवति इत्यन्तर्मुहूर्त्तमात्रेणासौ पर्याप्तको भवति, इति कृत्वाऽन्तर्मुहूर्त्तात्परतः प्रथमसमये वैक्रियशरीरस्य सर्वबन्धको भवति इति एवं सर्वबन्धकान्तरालेऽन्तर्मुहूर्तो देशबन्धकः नवरं देशबन्धको भूत्वा म्रियते, शेषं तं चेव । यदा उत्कृष्टेनान्तरं कार्यं देशबन्धके सर्वबन्धके वा, तदा वायुरौदारिकशरीरी वैक्रियतां गतः सर्वबन्धको भूत्वा मृतः, ततः परमौदारिकशरीरिषु पल्योपमस्यासंख्येयभागं तिष्ठेत् । पञ्चेन्द्रियतिर्यग्योनिकः वैक्रियं गतः प्रथमसमये सर्वबन्धकस्ततः परं देशबन्धकः अंतर्मुहूर्त्तमात्रं तत औदारिकशरीरस्य सर्वबंधको भूत्वा समयं च देशबन्धको जातः, पुनः श्रद्धेयमुत्पन्ना वैक्रियं करोमीति पुनः वैक्रियस्य प्रथमसमये

सर्वबन्धक एवेति अन्तर्मुहूर्त्तमन्तराले । "उक्कोसेणं पुव्वकोडिपुहुत्तं जीवस्स णं भंते ! वाउकाइयत्ते णो वाउकाइयत्ते पुणरवि वाउकाइयत्ते वैक्रियं बन्धान्तरं कियन्तं कालं ? सव्वबंधंतरं जहन्नेणं अंतोमुहुत्तं" कथम् ? वायुर्वैक्रियशरीरी भवन् क्षुल्लकभवमात्रेण मृतः, ततः पृथिवीकायिकेषूत्पन्नः तत्रापि क्षुल्लकभवमात्रं स्थित्वा पुनर्वायुर्जातः, तत्रापि कतिपयान् क्षुल्लकभवान् क्षुल्लके क्षुल्लके स्थित्वा वैक्रियं गतः तत्र वैक्रियस्य वैक्रियस्य च सर्वबन्धकयोरन्तरमन्तर्मुहूर्त्तम् । कथम् सप्तदश क्षुल्लकभवा एकस्मिन् उच्छ्वासे भवन्तीति—'उक्कोसेणं वणस्सइकाले' कथम् ? वायुर्वैक्रियशरीरी भवन् मृतो वनस्पत्यादिषु अनन्तं कालं स्थित्वा[1] वैक्रियशरीरं यदा पुनर्लप्स्यते तदा भविष्यतीति, एवमेव देशबन्धः ।

"जीवस्स णं भंते ! रयणप्पभा पुढवीनेरइयत्ते णो रयणप्पभापुढविनेरइत्ते पुणरवि रयणप्पभापुढविनेरइत्ते कियंतं अंतरं ?" इति नारको दशवर्षसहस्रस्थितिकालस्तत उद्वर्त्य पञ्चेन्द्रियेषु अन्तर्मुहूर्त्तं स्थित्वा पुनर्नारकेष्वेवोत्पन्नो प्रथमसमये सर्वबन्धः, इत्येवं दशवर्षसहस्रान्तर्मुहूर्त्तातिरिक्ता उक्ता । उद्वर्त्य ततो वनस्पत्यादिष्वनन्त-

---

टी०-१ पु० वैक्रियं गतस्तत्र वैक्रियस्य वैक्रियस्य च सर्वबन्धयोरन्तरमन्तर्मुहूर्त्तं कथं सप्तदश क्षुल्लकभवा एकस्मिन् उच्छ्वासनिश्वासे भवन्तीति 'उक्कोस वणस्सतिकालो' कथम् वायुः वैक्रियशरीरी भवन् मृतः वनस्पत्यादिषु अनन्तं कालं स्थित्वा वैक्रियशरीरं ।

कालं स्थित्वा पुनर्यायात् देशबन्धान्तरं नारको देशबन्धको मृतः ततोऽन्तर्मुहूर्तमात्रं पञ्चेन्द्रियेषु स्थित्वा पुनर्नरकेषूत्पन्नस्य प्रथमसमये सर्वबन्धक एव, इति कृत्वा अन्तर्मुहूर्तमन्तरालम्। उत्कृष्टमन्तरालं तथैव। 'आनतकल्पीयानां सर्वबन्धान्तरं जहण्णं' इति आनतीयश्च्युतोऽष्टादशसागरोपमाणि स्थित्वा१ (वर्षपृथक्त्वं मनुष्येषु स्थित्वा पुनस्तत्रैव प्रथमसमये सर्वबन्धक एव इति अष्टादशसागरोपमाणि वर्षपृथक्त्वाधिकानि। उत्कृष्टोऽनन्तकालं कथम्? तस्माच्च्युतोऽनन्तकालं वनस्पत्यादिषु स्थित्वा पुनर्यायात्। देशबंधे देशबंधकश्च्युतः) वर्षपृथक्त्वमनुभूय मानुष्यं पुनर्गतस्य सर्वबन्धानन्तरं देशबन्ध एव। एवं चयः—

'सव्वत्थोवा वेउव्विय सव्वबंधका: देशबन्धकाः असंख्येयगुणा पूर्वोत्पन्ना बहवः उत्पद्यमानकाः स्तोकाः, अबन्धकास्त्वनन्तगुणाः सिद्धाः पृथिव्यब्वनस्पत्यादयः सर्वे अबन्धकाः। वैक्रियशरीरस्यानन्तगुणाः। 'आहारकशरीरस्य सर्वबन्ध एकसमयम्, देशबन्धः जहण्णेणं अंतोमुहुत्त' उक्कोसं वि अंतोमुहुत्त' कथम्? अन्तर्मुहूर्तमात्रमेवाऽऽहारकशरीरी भवति, परतः औदारिकशरीरमेव गृह्णाति, इति सर्वबन्धान्तरं जहण्णं अंतोमुहुत्त', कथम्? मनुष्य आहारकशरीरप्रतिपन्नो अन्तर्मुहूर्तमात्रं स्थित्वा औदारिकशरीरस्य सर्वबन्धकः तस्य पुनः संशयः समुत्पन्नः तदा पुनरपि

टी—१ पु० पुनस्तत्रैव प्रथमसमये सर्वबन्धकमेवेति अष्टादशवर्षपृथक्त्वानि उक्त्वा तस्मात् च्युतोऽनन्तकालं स्थित्वा वनस्पत्यादिषु पुनर्यायात् देशबन्धके देशबन्धकाश्च्युतः।

आहारकशरीरं गृह्णाति प्रथमसमये सर्वबन्धक एव, इति एव कृत्वा सर्वबन्धान्तरमन्तर्मुहूर्तम् । उक्कोसं वि निर्मुच्यते आहारकशरीरमनन्तकालो लभ्यते । सव्वथोवा आहारकस्तथैव१ भावनीयम् । अबंधका अनन्ता ( आहारकं शरीरं मनुष्याणां, तत्रापि संयतानां भवतीति शेषकालं सर्व एवाबन्धकाः अनन्तासक्क इति अनन्तगुणाः । तैजसशरीरबन्ध अभव्यानामनाद्यपर्यवसितम्, भव्यानामनादिसपर्यवसितमिति अस्यान्तरं नास्ति यस्मात् जीवः तेनाऽविनिर्मुक्त एव सदा संसारस्थः । सर्वस्तोका अबन्धकाः देशबन्धका अनन्तास्तस्य सर्वबन्ध एव नास्ति, इति सर्व एव संसारस्थाः देशबन्धकास्तेनानन्ताः । नहि एकसमये औदारिकवैक्रिययोर्बन्धो विद्यते, इति कृत्वा नोबन्धक एव अबन्धः एवमाहारकस्य । तैजसस्य पुनः सदैवाविरहितत्वाद् बन्धको देशबन्धकेन, सर्वबन्धो नास्ति इति । एवं कम्मग्गसरीरस्स तेजस इव ‥ औदारिक शरीरस्य बन्धो वा भवति अबन्धो वा, विग्रहस्य औदारिकस्याऽबन्धकः अविग्रहस्थो बन्धकस्ततः परं देशबन्धकः, अतोऽभिधीयते । एवं वैक्रियमाहारकं च । कार्मणशरीरस्य पुनः सर्वदा देशबन्धकं चेति ।

सर्वस्तोका आहारकस्य सर्वबन्धकाः यस्मात् प्रतिपद्यमानकाः स्तोकाः,१ । ( देशबन्धकाः ) पूर्वप्रतिपन्नाः पुनर्बहव इति संख्येयगुणाः ।२ वैक्रियशरीरिणो बहवः सत्त्वाः आहारकशरीरिणः स्तोकाः यस्मात् तस्मादसंख्येय-

टी०—१ पु० आहारकशरीरं मनुष्याः तत्र तेऽपि संयतानां भवतीति शेषकालं सर्व एव बन्धकाः ।

गुणाः ।३ तस्यैव देशबन्धकाः असंख्येयगुणाः पूर्वोत्पन्ना बहवः उत्पद्यमानकाः स्तोकतराः ।४ तैजसकार्मणे द्वे अपि तुल्ये यस्मात् सर्वसत्त्वानां संसारिणां स्तः इति, अबन्धकाश्च सिद्धा ।५ इति । औदारिकशरीरस्य सर्वबन्धका अनन्तास्ते वनस्पत्यादीन् प्रत्यभिधीयन्ते ।६ तस्यैवौदारिकशरीरस्याऽबन्धका विशेषाधिकाः ।७ तस्यैव देशबन्धका असंख्येयगुणाः ।८ तैजसकार्मणयोर्देशबन्धका विशेषाधिका यस्मात् सर्वसत्त्वानाम् ।९ वैक्रिया अबन्धका विशेषाधिकाः यस्माद्वैक्रियं नारकदेवानाम् ।१० आहारका अबन्धका विशेषाधिकाः यस्मात् मनुष्याणामेव इति ।११ आभिश्च गाथाभिर्भावनीयं बन्धाऽबन्धाऽल्पबहुत्वम्—

"ओरालसव्वबंधा, थोवा अबंधया विसेसहिया । तत्तो य देसबंधा, असंखगुणिया कहं णेया ? ॥१॥
पढमंमि सव्वबंधो, समये सेसेसु देसबंधो उ । सिद्धाईण अबंधो, विग्गहगईयाण य जियाणं ॥२॥
इह पुण विग्गहिये च्चिय, पडुच्च भणिया अबंधगा अहिया । सिद्धा अणंतभागंमि, सव्वबंधाणवि हवंति ॥३॥
उजुया य एग वंका, दुहओ वंका गई भवे तिविहा । पढमाइ सव्वबंधा, सव्वे बीयाइ अद्धं तु ॥४॥
तइयाइ तइयभंगो, लब्भइ जीवाण सव्वबंधाणं । इति तिण्णि सव्वबंधा, रासी तिण्णेव य अबंधा ॥५॥
रासिप्पमाणओ ते तुल्लाऽबंधा य सव्वबंधा य । संखापमाणओ पुण, अबंधका जहन्नमहिया ॥६॥

जे एगसमइया ते, एगनिगोदम्मि छद्दिसिं एंति । दुसमइया तिपयरिया, तिसमईया सेसलोगाओ ॥७॥
तिरियाय यं चउद्दिसि, पयरमसंखप्पएसबाहल्लं । उड्ढं पुव्वावरदाहिणुत्तरा य या य दोपयरा ॥८॥
जे तिपयरिया ते छद्दिसिएहिंतो भवंतऽसंखगुणा । सेसावि असंखगुणा, खेत्तासंखेज्जगुणियत्ता ॥९॥
एवं विसेसअहिया, अबंधया सव्वबंधएहिंतो । तिसमइयविग्गहं पुण, पडुच्च सुत्तं इमं होइ ॥१०॥
चउसमए विग्गहे पुण, संखेज्जगुणा अबंधगा होंति । एएसिं निदरिसणं, लवणारासीहिं वोच्छामि ॥११॥
पढमो होइ सहस्सं, दुसमइया दोवि लक्खमेक्केक्कं । तिसमइया पुण तिन्नि वि, वासी कोडी भवेक्केक्का ॥१२॥
एएसिं जइ संभव–मत्थोवणयं करेज्ज रासीणं । एत्तो असंखगुणिया, वोच्छं जह देसबंधा से ॥१३॥
एगो असंखभागो, वट्टइ उव्वट्टणोववायम्मि । एगनिगोए निच्चं, एवं सेसेसु वि स एव ॥१४॥
अंतोमुहुत्तमत्ता, ठिई निगोयाण जं विणिद्दिट्ठा । पल्लट्टंति निगोया, तम्हा अंतोमुहुत्तेणं ॥१५॥
तेसिं ठितिसमयाणं, विग्गहसमया हवंति जइभागे । एव तिभागे सव्वे, विग्गहिया सव्वजीवाणं ॥१६॥
सव्वे वि य विग्गहिया, सेसाणं जं असंखभागंमि । तेणाऽसंखगुणा देस–बंधयाऽबंधएहिंतो ॥१७॥
वेउव्विय आहारग, तेयाकम्माइं पढियसिद्धाइं । तहवि विसेसो जो जत्थ, तत्थ तं तं भणिहामि ॥१८॥
वेउव्वियसव्वबंधा, थोवा जे पढमसमयदेवाई । तस्सेव देसबंधा, असंखगुणिया कहं के वा ? ॥१९॥

[उच्यते] तेसिं चिय जे सेसा, ते सव्वे सव्वबंधए मोत्तुं। होंति अबंधाऽणंता, तव्वज्जा सेसजीवा जे ।२०॥
आहारसव्वबंधा, थोवा दो तिण्णि पंच वा दस वा। संखेज्जगुणा देसे, ते उ मुहुत्तं सहस्साणं ॥२१॥
तव्वज्जा सव्वजिया, अबंधया ते हवंतऽणंतगुणा। थोवा अबंधया तेअ-गस्स संसारमुक्का जे ॥२२॥
सेसाय देसबंधा, तव्वज्जा ते हवंतऽणंतगुणा। एवं कम्मगमेया वि, नवरि णाणत्तमाउम्मि ॥२३॥
[ तच्चायुर्नानात्वमेवम्— ]
थोवा आउयबंधा, संखेज्जगुणा अबंधया हुंति। तेयाकम्माणं सव्व,—बंधगा नत्थऽणाइत्ता ॥२४॥
असंखेज्जगुणा आउगस्स, किमबंधगा न भण्णंति ?। जम्हा असंखभागो, उवट्टइ एगसमयेणं ।।२५॥
भण्णइ एगसमइओ, कालो उवट्टणाइ जीवाणं। बंधणकालो पुण आउगस्स अंतोमुहुत्तो उ ।।२६॥
जीवाण ठिईकाले, आउयबंधद्धमाइए लद्धं। एयंइभागे आउस्स, बंधया सेसजीवाणं ॥२७॥
जं संखेज्जतिभागो, ठिइकालस्साउबंधकालो उ। तम्हाऽसंखगुणा तो, अबंधगा बंधएहिंतो ।।२८॥
संजोगप्पाबहुय, आहारगसव्वबंधगा थोवा। तस्सेव देसबंधा, संखगुणा ते य पुव्वुत्ता ॥२९॥
तत्तो वेउव्विय सव्व- बंधगा दरिसिया असंखगुणा। जमसंखा देवाई, उववज्जंतेगसमएणं ।३०॥
तस्सेव देसबंधा, असंखगुणिआ हवंति पुव्वुत्ता। तेयकम्माऽबंधा, अणंतगुणिया य ते सिद्धा ॥३१॥

तत्तो उ अणंतगुणा, ओरालियसव्वबंधगा होंति । तस्सेव ततोऽबंधा य, देसबंधा य पुव्वुत्ता ॥३२॥
तत्तो तेअगकम्माणं, देसबंधा भवे विसेसहिया । ते चेवोरालियदेस,-बंधगा होंति मेवऽन्ने ॥३३॥
जे तस्स सव्वबंधा, अबंधगा जे य नेरइयदेवा । एएहिं साहिया ते, पुणाइ के सव्वसंसारी ॥३४॥
वेउव्वियस्स तत्तो, अबंधगा साहिया विसेसेणं । ते चेव य नेरइयाइ-विरहिया सिद्धसंजुत्ता ॥३५॥
आहारगस्स तत्तो, अबंधगा साहिया विसेसेणं । ते पुण के ? सव्वजीवा, आहारगलद्धीए मोत्तुं ॥३६॥

॥ समत्तो बंधो ॥ ॥ अष्टमशते नवमोद्देशकः समाप्तः ॥

卐

## अथाष्टमशते दशमोद्देशकः—

'एगे भंते ! पोग्गलत्थिकायपएसे'त्यादि-प्रश्नः, स्याद्द्रव्यमन्यद्रव्ये, द्रव्यदेशः ते भङ्गा द्विप्रदेशः स्याद्द्रव्यम् । यदा एकप्रदेशावगाढः तदा द्रव्यं द्रव्यदेशो वा, यद्वा द्वयोरवगाढस्तदा दव्वाइं दव्वदेसा वा, द्विप्रदेशिकद्रव्यस्य देशौ स्याद्द्रव्यं द्रव्यदेशश्च, यदा द्रव्यं तदा द्विप्रदेशिक एव, यदा द्रव्यदेशस्तदा द्विप्रदेशिक-देशः, परमाणुशेषाणां प्रतिषेधः । त्रिप्रदेशिकादेर्देशः स्याद्द्रव्याणि, द्विप्रभृतिबहुवचनं स्यात् द्रव्यदेशौ बहुवचन-मस्मिन्नर्थे स्यात् द्रव्यं चैकं द्रव्यदेशश्च द्वितीयः तेषां न सन्ति । 'केवइया णं भंते ! लोगागासपएसा ?'

यस्मादसंख्येयप्रदेशिको लोकः, जीवस्स कियन्त ? तावन्त एव, कथम् ? यस्माद् जीवः चासंख्येयप्रदेशिकः, सर्व एव लोकं व्याप्यावतिष्ठते समुद्घातकाले केवली मनुष्याणां जीवप्रदेशः ज्ञानावरणीयप्रदेशैर्वेष्टितः स्यात् कथं केवलिनं प्रतीत्य दर्शनावरणीयमोहनीयान्तरायिकेषु चतुर्षु अपि भवेद्वेष्टितः । यदा जीवप्रदेशः वेष्टितस्तदा अष्टानामपि कर्मणां स्यात् सिद्धान् प्रतीत्य, तेऽपि हि जीवा मनुष्याणां कर्मचतुष्टयेन नियमाद्वेष्टिताः, वेदनीयायुष्कनामगोत्राणां यस्य वेदनीयं तस्य ज्ञानावरणीयं स्यात्, केवलिनं प्रतीत्य, यस्य ज्ञानावरणीयं तस्य मोहनीयं स्यात्, क्व एकं प्रतीत्य क्षपको हि यावत् समयद्वयेन केवलं नोत्पादयति तावज्ज्ञानावरणीयबन्धकः तस्य च मोहनीयं स्यात् अन्येषां ज्ञानावरणीयबन्धकः नास्ति इति स्यात् । यदा यस्यायुस्तस्य ज्ञानावरणीयम्, आयुः केवलिनोऽपि अस्ति तस्य च ज्ञानावरणीयं नास्ति, शेषाणामस्तीति स्यात् । एवं नामगोत्रे यस्य वेदनीयं तस्य मोहनीयं स्यात्, केवलिनं प्रतीत्य । यस्य वेदनीयं तस्यायुर्नियमाद्यथा केवलिनः । अन्येषां च एवं नामगोत्रे यस्य वेदनीयं तस्यान्तरायं स्यात्, क्व ? केवलिनो नास्ति अन्येषामस्तीति स्यात् । यस्यायुर्नामगोत्राणि तस्य मोहनीयं स्यात् केवलिनः सत्स्वप्येतेषु नास्ति अन्येषां चास्ति ।

॥ इति अष्टमशते दशमोद्देशकः ॥

॥ समाप्तं चाष्टमशतकम् ॥

## *अथ नवमशतकम्—

### अथ नवमशते एकत्रिंश उद्देशः—

'असोच्चा णं भंते ! केवलिस्स वा केवलिसावगस्स वा' इत्यादि केवली येन स्वयमेव पृष्टः श्रुतं वा, यस्मात् केवली श्रावकः 'केवलिउवासगस्स वा केवलिना कथ्यमानमन्यस्य यः शृणोति, 'तप्पक्खियस्स वा' स्वयम्बुद्धस्य ।

॥ नवमसयस्स इगतिसइमो उद्देसो सम्मत्तो+ ॥

### अथ नवमशते चतुस्त्रिंशत्तमोद्देशकः—

'नोपुरिसेवि हणति' पुरुषपार्श्वस्थस्य अयं जीवम् । 'पुढविकाइएणं भंते' इत्यादि यथा वनस्पतिः अन्यस्योपरि अन्यस्थितः तत्तेजोग्रहणं करोति एवं पृथिवीकायिकादयोऽपि अन्योऽन्यसम्बद्धत्वात् प्राणापानादि कुर्वन्ति । ॥ इति नवमशते चतुस्त्रिंशत्तमोद्देशकः ॥

॥ समाप्तं नवमशतकम् ॥

---

टी० * १ थी ३० उद्देशनी चूर्णि आपवामां आवेल नथी ।

\+ ३२ ३३ उद्देशनी चूर्णि आपवामां आवेल नथी ।

## अथ दशमशतकम्—

### अथ दशमशतके प्रथमोद्देशः—

'इंदा णं भंते ! दिसा किं जीवा' ? इति पुच्छा—यदुक्तम्—ऐन्द्र्यादिशि किं जीवाः ? प्रश्नः ये जीवदेशास्ते एकेन्द्रियाणां एकप्रदेशिकाः विदिशः दिशो महत्यः । 'चरिमंते एगपएसियाए सेढीए' तत्रैकेन्द्रियाः देशाः, नह्येकप्रदेशजीवावगाढ इति । जीवदेशा यत्र देशस्तत्र प्रदेशोऽपि भाव्यम्, प्रदेशशब्द इव प्रदेशव्यवहारात्प्रदेशाः सर्वत्रैव अतीन्द्रियस्य समुद्घातगतस्य चरमान्ते अनिन्द्रियदेशाः । धर्मास्तिकायो न सकलः पूर्वस्यां दिशि यस्मात् स सर्वलोकमवगाह्याऽवस्थितः इति न सर्व एव पूर्वस्यां किं तर्हि देशः प्रदेशा वा । एवमधर्माकाशास्तिकायावपि, कालश्च । आग्नेय्यां दिशि न जीवाः, यस्मात् सा हि एकप्रदेशिका । सर्वत्र जीवस्य चैकस्मिन् प्रदेशेऽवगाहो नास्ति इति देशः पुनर्विद्यते, प्रदेशाश्च बहूनामेकत्रावगाढाः पङ्क्तावनस्थिताः, भङ्गाः यथासम्भवं करणीयाः । आग्नेय्यां दिशि एकेन्द्रियदेशाः द्वीन्द्रियदेशः देशा वा द्वीन्द्रियाणां वा देशाः । अनिन्द्रियस्य समुद्घातितस्य दण्डावस्थायां न देशः देशा वा, यदा व्याप्तं तदा प्रदेशे न जीवप्रदेशास्ते एकेन्द्रियप्रदेशाः । अथवा एकेन्द्रियप्रदेशाश्च द्वीन्द्रियस्य च प्रदेशाः यदा सर्वमभिहितं देशः देशा वा, यत्र देशस्तत्र

प्रदेशैर्भाव्यम्, प्रदेशसमवाया देशव्यपदेशः तस्माद्वा प्रदेशो जीवस्य नास्ति एव, यावदनिन्द्रियाः ।

॥ इति दशमशतके प्रथमोद्देशकः ॥

卐

## अथ दशमशतके द्वितीयोद्देशः—

'वीईपंथे ठिच्चा' वीचिशब्दः सहभावे सम्प्रयोगे वा, स च संयोगे द्वयोर्भवति, कषायाणां च जीवस्य च सम्बन्धो वीचिशब्दः वाच्यः । अथवा वीचिरपूर्वमेवोत्कृष्टतपः संयमाचारादेवान्यथास्थितिः । स पथि स्थित्वा 'आहासुत्तं रीयमाणस्स' आख्यातचारित्रकषायानुष्ठानात् एवमुच्यते ।

॥ इति दशमशतके द्वितीयोद्देशकः ॥

卐

## अथ दशमशतके तृतीयोद्देशकः—

'आइड्ढीए णं भंते ! देवे जाव चत्तारि पंच देवा वासंतराइ वीइवएज्जा' कल्पान्तराणीति यावत् अल्पर्धिक-महर्धिकस्य मध्येन शारीरस्य गच्छेत्, स तत् विमोहयित्वा ( विमोह्य ) प्रभूतान्धकारं कृत्वा तस्य गच्छति यावन्न पश्यति ।

॥ इति दशमशतके तृतीयोद्देशकः ॥

## अथ दशमशतके चतुर्थोद्देशकः—

'तायत्तीसं सहाया गाहावइ'त्ति त्रयस्त्रिंशदिति यावदुक्तं गृहपतयः तत्प्रभृति त्रयस्त्रिंशकाः न तत्परत इति गौतमस्य आशङ्का । ॥ इति दशमशतके चतुर्थोद्देशकः ॥

卐

## अथ दशमशतके पञ्चमषष्ठोद्देशकौ—

'से तं तुड्डिए तुरिकंता' । ॥ इति दशमशतके पञ्चमषष्ठोद्देशकौ ॥

॥ समाप्तं च दशमशतकम् ॥

## अथैकादशं शतकम्—

## अथैकादशशते प्रथमोद्देशकः—

'उप्पले णं भंते ! पत्तए' इत्यादि ग्रन्थः यदा ह्येकः पत्राद्यवस्था तदा एकजीवः तया वा द्वितीयप्रारब्धं भवति तदाऽनेकावस्था तस्य तदा बहव उत्पद्यन्ते अन्येषु पत्रेषु । 'बंधए बंधया वा' यदा एकं पत्रकं तदा

बन्धकः, परतो बन्धकाः ये बहवस्तदानीम् आयुषस्तु पुनर्बन्धको वा बन्धका वा अबन्धको वा अबन्धका वा । आउमज्झा बन्धकाले बन्ध आयुषः, अथवा 'बंधए अबंधए य' यस्माद् असौ एकः पत्रावस्थायां जीवः स बन्धकः । द्विपत्रावस्थायां यस्तु समुत्पन्नः स बन्धकः, एवं विभावनीयं सर्वत्र । लेश्याचतुष्टये एकसम्भवाद् बहुसम्भवाच्चाशीतिर्भङ्गाः । 'ते पुण अप्पणा जीवा अवण्णा से णं भंते ! उप्पले जीवो णो उप्पलजीवे पुणरवि उ जहण्णेणं दो भवगहणातिं' एवं पृथिवीकायिकत्वे द्वितीयमुत्पलकत्वे, ततः परं मनुष्यगतिं गत्वा सिद्धिं यायात् । अन्यत्र बहुशः स्थित्वा ततः सिद्धिं यायात् इति उक्तं संख्येयम् । कालतो 'दोसु' मुहूर्त्ता, पृथिवीत्वेऽन्तर्मुहूर्त्तं पुनरुत्पलत्वेऽन्तर्मुहूर्त्तम्, ततो मनुष्यगतिं गत्वा सिद्धिं यायात्, अन्यत्र बहुशः स्थित्वा ततः सिद्धिमाप्नोति, अन्यत्र वा बहुशः गत्वा सिद्धिं यायादिति । एवं द्वीन्द्रियादिषु नेयम् । समुद्रे सहस्रमुत्पलं पुष्करिणीषु च । कालतः कियन्तं कालम् ! अन्तर्मुहूर्त्तम्, उत्कर्षेण पूर्वकोटीपृथक्त्वम् ।

॥ इति एकादशशते प्रथमोद्देशकः ॥

卐

## अथ एकादशशते द्वितीयाद्यष्टमान्तोद्देशकः—

शालुकमुत्पलवज्ज्ञेयम् । ॥ इति द्वितीयः ॥

पलाशः किंशुकः ॥ इति तृतीयः ॥

कुम्भी वृक्षविशेषः । ॥ इति चतुर्थः ॥

पलानि यस्य नाडीवान् । ॥ इति पञ्चमः ॥

सालंमि धणुपुहुत्तं, होइ पलासेय गाउयपुहुत्तं । जोयणसहस्समहियं, अवसेसाणं तु छण्हं पि ॥१॥
कुंभीए नालियाए, वासपुहुत्तं ठिई उ बोधव्वा । दसवाससहस्साइं, अवसेसाणं तु छण्हं पि ॥२॥
कुंभीए नालियाए, होंति पलासे य तिण्णि लेसाओ । चत्तारि उ लेसाओ, अवसेसाणं तु पंचण्हं ॥३॥

'उप्पल[१] सालु[२] पलासे,[३] कुंभी[४] नालीय[५] पउम[६] कन्ने[७] ।
नलिणे[८] पि य अट्ठमयं, एक्कारसयंमि बोधव्वं ॥१॥

## ॥ इति एकादशशते द्वितीयाद्योऽष्टमान्ता उद्देशकाः ॥

卐

## ॥ अथैकादशशते नवमोद्देशकः ॥

'होत्तिया पोत्तिया' इत्यादि अग्निहोत्रिकाः, 'पोत्तिया'—वस्त्रधारिणः, 'कोतिया'—भूमिशायिनः, 'जन्नई'—

यज्ञयाजिनः, 'सड्डुई'–श्राद्धाः, 'थालई'–गृहीतभाण्डाः, 'उपउट्ठा'–कुण्डिकाश्रमणाः, 'दंतुक्खलिया'–फलभोजिनः, 'उम्मज्जिया'–अभिग्रहविशेषाः । यदुक्तम्—

"उद्धकंडुयगा अहोकंडुयगा दाहिणकुलगा दाहिणकुले वसियव्वं गंगाए, उत्तरकुलियाणं उत्तरकुले, संखं धमिऊण जिमेयव्वं यदि न आगच्छइ अण्णो कोवि, 'कुलंधमया' कुले ठिच्चा सद्दं काऊण भोत्तव्वं, 'मियलुद्धगा' प्रतीता एव, 'हत्थितावसा'–हत्थिं मारिऊण बहुकालं तेणं वर्णेति, जलाभिसेयकढिणगाय' ण्हाइउण भुंजंति ण्हायंता वा पंडरीभूता, अंबुवासिणो' पाणिए वुड्डा एव अच्छंति 'दिसापोक्खितावसा' प्रोक्ष्य उदकेन ततः पुष्पफलमुच्चिनोति, वेदिं वेदंति बहुवा करोति वर्द्धन्ती बहुकारिका 'सत्तंगाइ समादेह' सप्ताङ्गानि समादधाति–सन्निधापयति–स्कन्धा१ वल्कलं२ स्थानं३ शय्याभाण्डं४ कमण्डलु५ दण्डदारु६ आत्मानमिति ।

## ॥ इति एकादशशतके नवमोद्देशकः ॥

卐

## अथ एकादशशते दशमोद्देशकः—

'अहेलोए तप्पगारसंठिए' इयं स्थापना— । 'तिरियलोए झल्लरिसंठिए' इयं स्थापना— ।

'उड्डलोए उद्धमुर्चिंगसंठिए' इयं स्थापना । लोएणं भंते किंसंठिए ? 'सुपतिट्ठासंठिए' स्थापनेयम् । अलोएणं भंते किंसंठिए पण्णत्ते ? गोयमा । झुसीरगोलकसंठिए पण्णत्ते स्थापना चेयम्— O । अलोकस्य लोकः शुपिरमिवाभाति । 'अहेलोए खेत्तलोए' अधोलौकिकग्रामेषु समुद्घाति वा धर्मभेदः द्वौ एवं धर्मस्य २ आकाशस्य २ अद्धासमय इति । अधोलौकिकग्रामेषु स नोर्ध्वलोकोऽलोकप्रश्ने धर्मास्तिकाय एव न देशप्रदेशौ सर्वव्यापित्वात् एव धर्मास्तिकायः न आकाशास्तिकायः समस्तलोके विद्यते यस्मात् देशप्रदेशौ लोके विद्येते 'अहेलोयखेत्तलोयस्स णं भंते ! एगंमि आगासं पदेसिं कि जीवा णो जीवा य ? यस्मान्नेकैकस्मिन् आकाशप्रदेशजीवस्यावगाहोऽस्ति, वहूनां पुनर्जीवानां देशस्य प्रदेशस्य वाऽवगाहो भवति इति जीवदेशा वि अजीवदेशा वि, यस्माद् धर्मास्तिकाय-प्रदेशः कालश्च । 'अवलोइए पडुच्च' आकाशप्रदेशेऽवगाढः परमाणुर्द्विप्रदेशिकादयश्चाकाशप्रदेशावगाढाः । अज्जीवदेसा वि अनन्तानन्तप्रदेशाश्च स्कन्धाः यस्मादवगाढास्तस्मात्प्रदेशा अपि । ये जीवास्ते एकेन्द्रियादयो भावनीयाः । एतेषु त्रयोदशसु प्रदेशेषु त्रयोदशप्रदेशिकानि त्रयोदशस्थितानि, एवं त्रयोदशप्रदेशा एकैकस्मिन् प्रदेशे यथा अत्र, एवमाकाशदेशेऽनन्तजीवावगाहेन एकैकस्मिन्नाकाशदेशे अनन्तप्रदेशाः । एवं लोकेऽसंख्येया निगोदा सूक्ष्माः सर्वजीवाः संख्येयकतुल्या एकाकाशप्रदेशे जीवप्रदेशे जीवप्रदेशा जघन्यं पदं यत्र खण्डगोलः, लोकान्ते तत् जघन्यपदम्, मध्ये तु प्रदेशमत्र परिहाण्या गोलेन तिष्ठता सर्वे दिक्का गोला लोके वृत्ताकारा बुद्ध्या स्थाप्यन्ते,

वलयं समन्ताद् दृश्यंते, तत्र स्तोका जघन्यपदं खण्डगोले, एकाकाशप्रदेशे जीवप्रदेशाः, सर्वजीवास्तस्मादसंख्येयगुणा उत्कृष्टप्रदेशाः, सर्वजीवेभ्यो विशेषाधिकाः, तत्रैव बादरपरिणतस्तिभादि एवं विशेषाधिकत्वं तेन बादरा अनन्तसा(रा)वगाहेन सर्वजीवेभ्योऽधिकत्वं स च गोलरूप्रदेशहान्या कार्य्यः, अनन्तप्रदेशाः, एकं देशं प्रविष्टाः, अतोऽधिको राशिर्जघन्यपदे प्रदेशा अनन्ततः, मध्यगोले जीवतुल्याः प्रदेशा न त्वनन्तत्वं, ततो जीवाः सर्वे असंख्येयाः उत्कृष्टे बादरोऽपि स्तिमकः । तदेतदर्थानुसारिण्यो गाथा भावनीयाः—

"लोगस्सेगपदे जहन्नयपयंमि जियपएसाणं । उक्कोसपए य तहा, सव्वजियाणं च के बहुया ? ॥१॥ इति प्रश्नः
उत्तरं पुनरत्र—थोवा जहण्णा य पए, जियप्पएसा जिया असंखगुणा । उक्कोसपयपएसा, तओ विसेसाहिया भणिया ॥२॥
एत्थ पुण जहण्णपयं, लोगंते जत्थ फासणा तिदिसिं । छद्दिसिमुक्कोसपयं, समत्तगोलंमि णण्णत्थ ॥३॥
उक्कोससमसंखगुणं, जहण्णयाओ पयं हवइ किं तु ? । नणु तिदिसिं फुसणाओ, छद्दिसि फुसणा भवे दुगुणा । ४॥
थोवा जहण्णा य पए, निगोयमित्तावगाहणा फुसणा । फुसणासंखगुणत्ता, उक्कोसपए असंखगुणा ॥५॥
उक्कोसपयममोत्तुं निगोयओगाहणाए सव्वत्तो । निप्फाइज्जइ गोलो, पएसपरिवुड्ढीहाणीहिं ॥६॥
तत्तो च्चिय गोलाओ, उक्कोसपयं मुइत्तु जो अन्नो । होइ निगोओ तंमि वि, अन्नो निप्फज्जती गोलो ॥७॥
एवं निगोयमित्ते, खेत्ते गोलस्य होइ निप्फत्ती । एव निपज्जंते, लोगगोला असंखिज्जा ॥८॥

ववहारनयेण इमं, उक्कोसपया वि एत्तिया चेव । जं पुण उक्कोसपयं, नेच्छइयं होइ तं वोच्छं ॥९॥
बायरनिगोयविग्गह,-गइयाई जत्थ समहिया अन्ने । गोला हुज्ज सुबहुला, नेच्छइयपयं तदुक्कोसं ॥१०॥
इहरा पडुच्च सुहुमे, बहुतुल्ला पायसो सगलगोला । तो बायराइगहणं, कीरइ उक्कोसयपयंमि ॥११॥
गोला य असंखेज्जा, होंति निगोया असंखया गोले । एक्केक्को उ निगोओ, अणंतजीवो मुणेयव्वो ।.१२॥
लोगस्स य जीवस्स य, होंति पएसया असंखया तुल्ला । अंगुलअसंखभागो, निगोयजियगोलगो गाहो ॥१३॥
जंमि जिओ तंमेव उ, निगोअ तो तम्मि चेव गोला वि । निप्फज्जइ जं खेत्ते, तो ते तुल्लावगाहणया ॥१४॥
प्रश्नः—उक्कोसयपएसे, किमेगजीवप्पएसरासिस्स । होज्जेगनिगोयस्स व, गोलस्स व किं समोगाढं ? ॥१५॥
उत्तरम्—जीवस्स लोगमेत्तस्स, सुहुमओगाहणावगाढस्स । एक्केक्कंमि पदेसे, होंति पएसा असंखेज्जा ॥१६॥
लोगस्स हिये भागे, निगोअओगाहणाए जं लद्धं । उक्कोसपएऽतिगयं, एत्तियमेक्केक्कजीवाओ ॥१७॥
एवं दव्वट्ठाओ, सव्वेसिं एक्कगोलजीवाणं । उक्कोसपयमइगया, होंति पएसा असंखगुणा ॥१८॥
तं पुण केवइएणं, गुणियमसंखेज्जयं भवेज्जहि । मन्नइ दव्वट्ठाइ, जावइया सव्वगोलत्ति ॥१९॥
किं कारणमोगाहण,-तुल्लत्ता जियनिगोयगोलाणं । गोला उक्कोसपएक्क-जियपएसेहिं तो तुल्ला ।२०॥
गोलेहिं हिए लोगे, आगच्छ जं तमेगजीवस्स । उक्कोसपयगयपदेस—रासितुल्लं हवइ जम्हा ॥२१॥

अहवा लोगपएसे, एक्केक्के ठविय गोलमेक्केक्कं । एवं उक्कोसपएक्क,–जियपएसेसमायंति ॥२२॥
गोलो जीवो य समा, पएसओ जं च सव्वजीवा वि । होंति समोगाहणया, मज्झिमओगाहणं पप्प ॥२३॥
तेण फुडं चिय सिद्धं, एगपएसंमि जे जियपएसा । ते सव्वजीवतुल्ला, सुणसु पुणो जह विसेसहिया ॥२४॥
जं संति केइ खंडा, गोला लोगं तवत्तिणो अन्ने । बायरविग्गहिएहिं य, उक्कोसपयं जमब्भहियं ॥२५॥
तम्हा सव्वेहिंतो, जीवेहिंतो फुडं गहेयव्वं । उक्कोसपयपएसा, होंति विसेसाहिया नियमा ॥२६॥
अहवा जेण बहुसमा, सुहुमा लोएऽवगाहणाए य । तेणेक्केक्कं जीवं, बुद्धीए विरल्लए लोए ॥२७॥
एवं पि सया जीवा, एगपएसगयजियपएसेहिं । बायरबाहुल्ला पुण, होंति पएसा विसेसहिया ॥२८॥
तेसिं पुण रासीणं, निदरिसणमिणं भणामि पच्चक्खं । सुहगहणगाहणत्थं, ठवणारासिप्पमाणेहिं ॥२९॥
गोलाण लक्खमेक्कं, गोले गोले निगोयलक्खं तु । एक्केक्के य निगोए, जीवाणं लक्खमेक्केक्कं ।३०॥
कोडिसयमेगजीव,–प्पएसमाणं तमेव लोगस्स । गोलनिगोयजीवाणं, दस उ सहस्सा समोगाहो ॥३१॥
जीवस्सेक्केक्कस्स य, दससहस्सावगाहिणो लोगे । एक्केक्कंमि पएसे, पएसलक्खं समोगाढं ॥३२॥
जीवसयस्स जहन्ने, पयम्मि कोडीजियप्पएसाणं । ओगाढा उक्कोसे, पयंमि वोच्छं पएसग्गं ।३३॥
कोडीसहस्सजीवाणं, कोडाकोडीदसप्पएसाणं । उक्कोसे ओगाढा, सव्वजियाऽवेत्तिया चेव ।३४॥

कोडीउक्कोसपयंमि, बायरजियप्पएसपक्खेवो । सोहणमेत्तियं चिय, कायव्वं खंडगोलाणं ॥३५॥
एएसिं जहासंभव-मत्थोवणयं करेज्ज रासीणं । सब्भावओ य जाणिज्ज, ते अणंता असंखा वा ॥३६॥

( इति निगोदषट्त्रिंशिका समाप्ता )

॥ एकादशशतके दशमोद्देशकः समाप्तः ॥

॥ परिसमाप्तं चैकादशशतकम् ॥

卐

अथ द्वादशशतम्—

अथ द्वादशशते +तृतीयोद्देशकः—

'सुदक्खु जागरियं जागरिंति' इति शोभनं दर्शनं यस्याऽसौ सुदक्खू धम्मं जागर्त्ति, अथवा सुदक्खुग्रहणं जागरणं विशेषणं सुदृशां जागर्यां जागर्त्ति ।

॥ इति द्वादशशतके प्रथमोद्देशकः ॥

+ टी० प्रथमद्वितीयोद्देशौ वृत्तौ न स्तः ।

"सव्वे वि णं भते भवसिद्धिया जीवा सिज्झिस्संति" इत्यादि सूत्रम्—ये सेत्स्यन्ति ते भव्याः नाऽभव्याः, न च भव्यविरहितो लोकः । यथाऽऽकाशश्रेणि सर्वमेवाकाशं प्रतरीकृत्यं चतुरस्रं अपहारः क्रियते न च तिष्ठति एतदार्षमात्रमनुच्छेदप्रकरणद्वारेण भावनीयमाभिर्गाथाभिश्च—

"तो भण्णइ किं न सिज्झंति, अहव किमभव्वसावसेसत्ता । निल्लेवणं न जुज्जइ, तेसिं तो कारणं अन्नं ॥१॥
भन्नइ तेसिमभव्वेवि, पइ अनिल्लेवणं न उ विरोवी । न उ सव्वभव्वमिद्धि, सिद्धा सिद्धंतसिद्धीओ ॥२॥
किह पुण भव्वबहुत्ता, सव्वागासपएसदिट्ठंता । नवि सिज्झिहिंति तो भणइ किं तु भव्वत्तणं तेसिं ? ॥३॥
जइ होउ णं भव्वावि, केइ सिद्धिं न चेव गच्छंति । एवं तेवि अभव्वा, को व विसेसो भवे तेसिं ॥४॥
भण्णइ भव्वो जोग्गो, दारु च दलियंति वावि पज्जाया । जोगो वि पुण न सिज्झइ, कोई रुक्खाइ दिट्ठंता । ५॥
पडिमाईणं जोगा, बहवो गोसीसचंदणदुमाई । संति अजोगा वि इहं, अन्ने एरंडभेंडाई ॥६॥
ण य पुण पडिमुप्पायण, संपत्ती होइ सव्वजोगाणं । जेसिं पि असंपत्ती, न य तेसि अजोग्गया होइ ॥७॥
किं पुण जा संपत्ती, सा नियमा होइ जोग्गरुक्खाणं । न य होइ अजोग्गाणं, एमेव य भव्वसिज्झणया ॥८॥
सिज्झिस्संति य भव्वा, सव्वेवित्ति भणियं च जं पहुणा । तंपि एयाएच्चिय, दिट्ठीए जयंति पुच्छाए ॥९॥
अहवा पडुच्च कालं, न सव्वभव्वाण होइ वोच्छित्ति । जं तीतणागयाओ, अद्धाओ दोवि तुल्लाओ ॥१०॥

तत्थातीतद्धाए, सिद्धो एक्को अणंतभागो सिं। कायं तावइयाओ च्चिय, सिज्झिहिइ अणागयद्धाए ॥११॥
ते दो अणंतभागा, होउं सो च्चिय अणंतभागो सिं। एवंपि सव्वभव्वाण, सिद्धिगमणं अणिद्दिट्ठं ॥१२॥

## ॥ इति द्वादशशते तृतीयोद्देशः समाप्तः ॥

卐

## अथ द्वादशशते चतुर्थोद्देशकः—

संहननभेदापातेन सर्वपुद्गलैः सह सम्बन्धोऽनुभूतः यदा द्विप्रदेशिकादिस्कन्धेन यावत्। सर्वद्रव्यैः सह परमाणुसम्बन्धः, अनन्ताः परिवर्त्ताः 'एगमेगस्स णं भंते! नेरइयस्स अतीता अणंता पोग्गलपरियट्टे'त्यादि— ये हि औदारिकशरीरग्रहणप्रायोग्याः पुद्गलास्ते यदा सर्वे गृहीता भवन्ति स पुद्गलपरिवर्त्तः, तादृग्विधास्तु अनन्ता अतीताः अनन्तकालत्वादतीतस्य एष्यत् कस्यचिदस्ति कस्यचिन्नास्ति, उद्वर्त्य यो मनुष्यत्वमासाद्य सिद्धिं यास्यति संख्येयैर्वा भवैर्यास्यति सिद्धिं तस्याऽपि परिवर्त्तो नास्ति औदारिकशरीरप्रायोग्यानां पुद्गलानामभव्यस्यापि, भव्यानां च येषामस्ति भव्यानां तेषां कस्यचिदेकः एकमेव परिवर्त्तनं कृत्वा सिद्धिं गच्छति कश्चिद्वा संख्येयाऽसंख्येयाऽनन्ता च। अभव्यस्याऽनन्ताः, भव्योऽपि न सेत्स्यति तस्याऽपि अनन्ताः। नारकस्य नारकत्वं नास्ति

यस्मादसौ वैक्रियशरीरी सदा । पृथिवीकायिकस्यातीता अनन्ताः एवं नेयं एयस्स णं निव्वत्तणं कालस्स । स्तोकः कार्मणशरीरनिवृत्तिपरिवर्त्तनकालः, ते हि सूक्ष्माः बहुभिश्च पुद्गलैर्ग्रहणं भवति शीघ्रं परिवर्त्तो भवति । तैजसः पुद्गलास्ततः स्थूलतराः स्थूरत्वाच्च स्तोकतरैर्ग्रहणं भवति इत्यतोऽन्तगुणाः । औदारिकग्रहणप्रायोग्या अनन्तगुणाः यस्मात्ते तेभ्यः स्थूलतराः अल्पतरैश्च निपद्यते, न पुद्गलैस्ततोऽनन्तगुणः । आणपाणुत्तं चिरकालेणोवलभति तस्मादनन्तगुणाः, ततो मनःस्तोकाः नाचिरेण च लभ्यते अतोऽनन्तगुणाः, तथैव वैक्रियपुद्गलाः वैक्रियमल्पानां सत्त्वानां बहूनां च कालेन लभ्यतेऽतोऽनन्तगुणाः । 'एएसि णं भंते ! ओरालियपोग्गलपरि०" जाव आणपाणुपोग्गलपरि० जाव आणपाणुपोग्गल' इति-सव्वथोवा वेउव्वियसरीरपरि० यस्मात्तदल्पानामेव सत्त्वानां ततो बहुतराणां भाषा तेनानन्तगुणाः, ततो मनस्तत आणपाणु बहुतराणाम्, तत औदारिकं बहुतराणाम्, ततस्तैजसः सर्वसत्त्वानाम्, एवं कार्म्मणमपि सर्वसत्त्वानां ते सूक्ष्मतराः तेजसात्तेऽनन्तगुणाः ।

॥ इति द्वादशशते चतुर्थोद्देशकः ॥

卐

अथ द्वादशशते पञ्चमोद्देशकः—

'प्राणातिपातादिजनितं कर्म प्राणातिपात उच्यते' पंच वर्णादिः, रत्नप्रभायां यदवकाशान्तरं भूमेश्च

तदन्तरम्, एतस्मात्सप्तममवकाशान्तरमाकाशे तनुवायुः तनुवायुतो घनवायुः घनवायुतो घनोदधिः [ ततः ] पृथिवीति एष क्रमः, तत्र यः सप्तम्यां पृथिव्यां तमतमायां तनुवायुः स सप्तमस्तनुवायुः, कर्म वपुः, स्पर्शं शीतोष्णस्निग्ध-रुक्षम्, द्रव्यलेश्या वर्णः, भावलेश्या अन्तःपरिणामः । 'कम्मओ णं भंते ! जीवे विभत्तिभावं परिणमति ? नो अकम्मओ' इति विभजनं—विभक्तिः—विभाग इत्यर्थः नरकतिर्यग्मनुष्यामरभवेषु नानारूपं परिणामं परिणमत इति यावत् । कम्मतो णं जए यदुक्तं जगदिति, गच्छतीति जगत् तांस्तान् भावान् शेषान्नारकादीनथाप्नोति । जीवद्रव्यमेव जगच्छब्देनोच्यते इति+ ।

## ॥ इति द्वादशशतके अष्टमोद्देशः ॥

---

टी० + पु० ॥ इति द्वादशशतके पञ्चमोद्देशः ॥

ततः पुरश्चान्द्रो मुच्यते स दृश्यते, प्रत्यग्राहु सदा चन्द्रो योजनराहुरर्धं तत् कथं छादयति, लेश्या खेडकस्येव पिच्छकलापः सच्छादयति । इति द्वादशशते षष्ठोद्देशः ॥

अथ द्वादशशतके अष्टमोद्देशः—

'दुसरीरेसु पोमेसु उववज्जेज्जा' यदुक्तं भवद्वयं गृहीत्वा सिध्यति । ततः परं यो नागभवं मनुष्यभवं च क्षिद्धिम्, शरीरो नागः कर्कुटवृषभः महान् अथवा कर्कुट एव वृषभः विदग्धवाची वृषभशब्दः । एवं मण्डुकवृषभः । 'गोलंगूलवसभे' मर्कटवृषभ इति यावत् । ॥ इति द्वादशशते अष्टमोद्देशः ॥

## अथ द्वादशशतके नवमोद्देशः—

'भवियदव्वदेवा' भव्या अनन्तरमेव ये देवगतिं यास्यन्ति जहण्णेणं अंतोमुहुत्तं, उक्कोसेणं तिण्णि पलिओवमाइं ते चोत्तरकुरुमनुजास्त्रिपल्योपमस्थितयः तैरवश्यं देवगतिं यातव्यमिति । भव्यद्रव्यदेवा नरदेवाः 'जहण्णेणं सत्तवाससयाइं' यथा ब्रह्मदत्तस्य, 'उक्कोसेणं चउरासीइं पुव्वलक्खाय' यथा भरतस्य । धर्मदेवानां जघन्येनान्तमुहूर्त्तम् उक्कोसेण देसुणा पुव्वकोडी उगभसेणस्येव । देवाहिदेवाणं जहण्णेणं बावत्तरीवासाइं, वीरस्येव, 'उक्कोसेणं च चउरासीपुव्वलक्खा' ऋषभस्वामिन इव । भावदेवानां जह० दसवाससहस्साइं व्यन्तराणामिव, उक्कोसेणं ३३ सागरोपमाणि सर्वार्थसिद्धानामिव । 'भवियदव्वदेवस्सणं अंतरं' यो मनुष्यः कालं कृत्वा देवत्वे दशवर्षसहस्रस्थितिकेषु देवेषु उत्पन्नो ततः प्रच्युत्य शुभपृथिव्यादौ गत्वा तत्रान्तर्मुहूर्त्तं स्थित्वा पुनर्भव्य एव जायते देवत्वे, इदमन्तरालं जह० । उत्कृष्टोऽनन्तकालाद्भविष्यति, नरदेवो मृतः प्रथमपृथिव्यामुत्कृष्टस्थितिमनुभूय पुनर्नरदेवो भवति । धर्मदेवो विपरिणामं गतोऽन्तर्मुहूर्त्तं पुनः प्रत्यागते परिणामे पुनः प्रतिपद्यते धर्मदेवत्वम् उत्कृष्टतोऽनन्तकालस्य । देवाधिदेवस्य नास्त्यन्तरं येनाऽसौ तेनैव भवेन सिद्धिं यास्यति न च प्रतिपतति । भावदेवस्य च्युतान्तर्मुहूर्त्तमन्यत्र स्थित्वा पुनरपि भावदेवः । वनस्पत्यादिषु प्रक्षिप्तोऽनन्तकालात् पुनर्भवति ।

॥ इति द्वादशशतके नवमोद्देशः ॥

## अथ द्वादशशतके दशमोद्देशः—

यस्य द्रव्यात्मा तस्य कषायात्मा स्यात् । द्रव्यात्मा जीवः स जीवात्मकत्वेन केवलिनोऽस्ति सिद्धस्य च, न च कषायात्माऽशेषसत्त्वानां चास्ति इति स्यात् ।१। यस्य द्रव्यात्मा तस्य योगात्मा स्यात्, सिद्धस्यापि द्रव्यात्मा विद्यते न च योगात्मा, शेषाणां चास्ति इति स्यात् ।२। यस्य द्रव्यात्मा तस्योपयोगात्मा नियमात् सिद्धस्य द्रव्यात्मा च विद्यते, उपयोगात्मा च विद्यते, उपयोगलक्षण आत्मा जीवितस्य, शेषसत्त्वानां पुनर्नियमत एव ।३। यस्य द्रव्यात्मा तस्य ज्ञानात्मा स्यात्, कथम् ? द्रव्यात्मतायामपि सत्यां ज्ञानिनोऽन्येऽज्ञानिनश्च तस्मात् स्यात् । यस्य पुनर्ज्ञानात्मा तस्य द्रव्यात्मा नियमात् सिद्धस्येव ।४। यस्य द्रव्यात्मा तस्य दर्शनात्मा नियमात् केवलिनः केवलदर्शनं सिद्धस्य च, शेषसत्त्वानां चक्षुरादीनीति नियमात् दर्शनं पुनरजीवस्य न भवत्येव ।५। यस्य द्रव्यात्मा तस्य चारित्रात्मा स्यात् सिद्धस्य द्रव्यात्मा विद्यते न च चारित्रात्मा । केवलिनः यथाख्यातचारित्रत्वात्, शेषसत्त्वानां शेषचारित्राणि यस्य चारित्रं तस्य द्रव्यात्मा नियमात् अजीवस्य चारित्रं न भवतीति ।६। यस्य द्रव्यात्मा तस्य वीर्यात्मा स्यात् सिद्धस्येव वीर्यवान् न सिद्धः, यस्य वीर्यात्मा तस्य द्रव्यात्मा नियमात् नहि अजीवस्य

वीर्यं भवति ।७। यस्य कषायात्मा तस्य योगात्मा नियमात् अत्र हि अयोगिनः कषायाः योगा–मनोवाक्काया न सन्ति, यस्य योगात्मा तस्य कषायात्मा स्यात्, केवलिनो वाक्काययोगात्मा विद्यते न च कषायात्मा तस्मात् स्यात् ।

यस्य कषायात्मा तस्योपयोगात्मा नियमात् नहि कषायवत उपयोगमन्तरेण कषायसम्भवः तस्मान्नियमः, यस्य पुनरुपयोगात्मा तस्य कषायात्मा स्यात् केवलिनः सिद्धस्यास्त्युपयोगात्मा न च कषायात्मा, शेषसत्त्वादीनामस्ति तस्मात्स्यात् ।

यस्य कषायात्मा तस्य ज्ञानात्मा स्यात् यस्य कषायात्मा तत्राज्ञानमस्ति येषामिति ज्ञानं च स्यात्, यस्य च ज्ञानात्मा तस्य कषायात्मा स्यात् केवलिनः सिद्धस्य च ज्ञानित्वेऽपि कषायात्मा नास्ति, अन्येषां च ज्ञानिनामस्तीति स्यात् ।

यस्य कषायात्मा तस्य दर्शनात्माऽवश्यं यस्य दर्शनात्मा तस्य कषायात्मा स्यात् यथा केवलिनः सिद्धस्य च केवलं दर्शनात्मा न च कषायात्मा विद्यते, अन्यदर्शनिनां कषायात्मा तस्मात् स्यात् ।

यस्य कषायात्मात्मा तस्य चारित्रात्मा स्यात् कथम् ? कषायश्चारित्री वा, अस्यात्र संयतश्चारित्री,

असंयतः कषायचारित्रश्च तस्मात् स्यात्, यस्य चारित्रात्मा तस्य कषायात्मा स्यात् कथम् ! केवली यथाख्यातचारित्री कषायात्मा च नास्ति, अन्येषां चारित्रिणां चास्ति ( च सन्ति ) कषायास्तस्मात्स्यात् ।

यस्य कषायात्मा तस्य वीर्यात्मा नियमात्, नहि अवीर्यस्य कषायात्मा विद्यते यस्य वीर्यात्मा तस्य कषायात्मा स्यात् यथा केवलिनः कषाया न सन्ति शेषाणां च सन्ति इति स्यात् ।

यस्य योगात्मा तस्योपयोगात्मा नियमात् यथा केवलिनः वाक्काययोगिनः अन्येषां च, यस्योपयोगात्मा तस्य योगात्मा स्यात् सिद्धस्येव । यस्य योगात्मा तस्य ज्ञानात्मा स्यात् योगित्वेऽपि ज्ञानिनोऽज्ञानिनश्च सन्ति, यस्य ज्ञानात्मा तस्य योगात्मा स्यात्, सिद्धानां ज्ञानात्मा अस्ति, न योगात्मा, केवल्यादीनां ज्ञानात्मा योगात्मा चास्ति ।

यस्य योगात्मा तस्य दर्शनात्मा नियमात् । यो हि योगी सन् नियमाद्दर्शनी चक्षुर्दर्शनी यावत्केवलदर्शनी, यस्य दर्शनात्मा तस्य योगात्मा स्यात् सिद्धस्य योगात्मा नास्ति केवलदर्शितायामस्तीति स्यात् ।

यस्य योगात्मा तस्य चारित्रात्मा स्यात् योगात्मत्वेऽपि देशविरतादीनां चारित्रात्मा नास्ति, प्रमत्तसंयतानां चास्तीति स्यात्, यस्य चारित्रात्मा तस्य योगात्मा नियमाद् यथा केवलिनः ।

यस्य योगात्मा तस्य वीर्यात्मा नियमात् न तु अवीर्यस्य योगाः सन्ति ।

आत्मा ज्ञानमज्ञानमिति प्रश्नः—आत्मा स्यात् ज्ञानं, स्यात् अज्ञानम्, यत् पुनर्ज्ञानं तन्नियमत एव आत्मा एवं भावना कार्या । 'सव्वथोवा ते चरित्ता वा तो' इत्यादि गाथाभिर्भाव्यते—

"कोडीसहस्सपुहुत्तं, जईण तो थोविआओ चरणाया । णाणायाऽणंतगुणा, पडुच्च सिद्धे य सिद्धाओ ॥१॥
होंति कसायायाओऽणंतगुणा जेण ते सरागाणं । जोगाया भणियाओ, अयोगिवज्जाण तो अहिया ॥२॥
जं सेसेसिगयाणवि लद्धी विरियं तओ समहियाओ । उवओगदवियदंसण, सव्वजीयाणं ततो अहिया ॥३॥

अवरं कज्जं ज्ञायते—आत्मा अनात्मा चैतद् वक्तव्यम् । रत्नप्रभा—आत्मनः आत्मा देशेनात्मा पृथिवीति सामान्यादन्यत् पृथिवीग्रहणात् न आत्मा उभयेनादिष्टा अवक्तव्यम् ।

एवं परमाणुर्द्विप्रदेशिकः सप्तमो न भङ्गः, देशत्रयं न भवति द्वित्वात्, यतोद्देशः सद्भावदेशोऽसद्भावे देशे उभये एव तत्राभावात् एते षडिति प्रदेशे एकत्र बहुवचनात् [इति] अंगे संग्रहो भङ्गानामिति ।

॥ इति द्वादशशतके दशमोद्देशः ॥

॥ परिसमाप्तं च द्वादशशतकम् ॥

## ॥ अथ त्रयोदशं शतकम् ॥

### त्रयोदशशतके प्रथमोद्देशः—

अधः सप्तम्यां मध्यमः संख्येयः विस्तृतः, चत्वारोऽसंख्येयविस्तृताः । चक्षुर्दर्शनिनोपयुक्तो न उपपद्यते, इन्द्रियाण्यपि त्यक्त्वा अनुपयुक्तस्तैः असंज्ञी याति न तूद्वर्त्तते । विभङ्गज्ञानी प्रतिपतिते उद्वर्त्तते मिथ्यादृष्टिता पुनर्यदाऽप्रतिपतिता भवति । 'केवइया अणंतरोववण्णगा' प्रथमसमयोत्पन्ना इत्यर्थः, एवमवगाढाः द्विप्रथमसमयक्षेत्रावगाढा इत्यर्थः । चरमो हि एकसमयः इतरे अचरमाः । 'णाणात्तं ओहीनाणी' तीर्थंकरादि संखेज्जत्तं ।

### ॥ इति त्रयोदशशते प्रथमोद्देशकः ॥

卐

### अथ त्रयोदशशते +चतुर्थोद्देशकः—

'इमीसे रयणप्पभाए पुढवीए उवरिमहेट्ठिलेसु खुड्डागपयरेसु एत्थ णं तिरियलोगस्स मज्झे अट्ठपएसिए

+ द्वितीयतृतीययोः न किमपि ।

रुयए पन्नत्ते' सर्वमध्ये संक्षिप्तक्षुल्लकप्रतराणि द्विश्रेणी इति यावत् । अधःपटलमध्ये चत्वारि, उपरितनप्रतरे चत्वारि, एतेऽष्टौ रुचकाकारः स्थाप्यते, चतुर्दिक्षु द्वौ प्रदेशौ विस्तरेण गतौ । 'एगेणं भंते धम्मत्थिकाये णं केवइए णं पुट्ठे ? जहन्नपदे तीहिं उक्कोसपदे छहिं'-उपरितनेन चैकेन द्वाभ्यां च बाहुभ्यां एवं जघन्येन, उपर्यधः एकैकः एवं षट् । अधर्मास्तिकायेन त एव त्रयः तद्गतश्चतुर्थः अधर्मास्तिकायः एवं चतुर्भिः स्पृष्टः षटस्पर्शे सप्तमः तद्गत एव । आकाशास्तिकाये सप्तभिः यतः सर्वतः आकाशमलोकेऽपि अतः सप्तभिः । जीवे गोलजीवैः अद्धासमयः अर्धतृतीयद्वीपसमुद्रद्वयक्षेत्रैः अतः स्यात्स्पृष्टः स्यादस्पृष्टः, यदि स्पर्शनं नियमादनेकैः आकाशमधर्मास्तिकायैः एकेन वा त्रयेन वा, त्रिप्रदेशिकादौ मध्य एकेन वक्रे द्वाभ्यामुपरि दर्शितः । एवं त्रयः उपरिपटले अधःपटले वा प्रविष्टः चतुर्भिः तैः यत्रैव लोके वा पुद्गलास्तिकायः धर्मप्रदेशैस्त्रयः यत्र स्थितः तेनाऽपि स्पृष्ट एव द्वौ पुद्गलौ । धर्मास्तिकायपुद्गलद्रव्ययोः सम्बन्धे प्रश्नः—कियद्भिः धर्मप्रदेशैः ? अत्र यः पूर्वः सोऽपरं स्पृशति ? उत्तरमत्र-यत्र चावगाढो द्वितीयः यस्तेन उत्तरः अधश्च स्पृष्टः । उत्कृष्टं यदि द्विप्रदेशे स्थितः, उत्कृ० पंच वर्त्तते च यत्र एवं षडितरस्यापि, एकप्रदेशेनस्थितः यो यः प्रक्षिप्यते स द्वौ, एवं द्विकवृद्धिः । अथवा द्विकाभिर्गच्छति असंख्येयादि दिक्त्वमेतत् । जघन्यपदे तेन संख्येयकेन द्विगुणेन द्विरूपाधिकेन जघन्यकं भवति, एको द्विगुणः तत्र प्रक्षिप्तो देशः ४, उत्कर्षैः पंचगुणैर्द्विरूपाधिकः

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| ७ | ४ | ६ | ८ | १० | १२ | १४ | १६ | १८ | २० | ५२ |
| | | १७ | १२ | | | | | | ४७ | ५२ |

एतद्दशकान्तं चोदयति गाथया—

"धम्माइपएसेहिं, दुपएमाई जहण्णयपयम्मि । दुगुणदुरूवहिएणं, तेणेव कहणु दुहविज्ज ( कहं नु हु फुसेज्जा)॥१॥"
परिहारः—"एत्थ पुण जहण्णपयं, लोगंते तत्थ लोगमालिहिउं । फुसणा दावेयव्वा, अहवा खंभाइकोडीए ॥२॥"

एवं जीवोऽन्यैः परमाणुवत् । आकाशास्तिकायेन । धर्मास्तिकायः सर्वः कियद्भिरन्यैः स्पृष्टः ?, न केनचिदपि । एकप्रदेशे यावदनन्तानन्तप्रदेशिका अपि अवगाढाः । 'दो भंते ! पोग्गलत्थिकायपएसा केवतिएहिं धम्मत्थिकायपएसेहिं पुट्ठा ? जहण्णपए छहिं, उक्कोसपए बारसहिं' एतत्सूत्रमन्यप्रकारेण भाव्यते—तत्र लोकान्ते द्विप्रदेशिकः स्कन्धः एकप्रदेशावगाढतया नयदर्शनं प्रतीत्य प्रतिद्रव्यावगाहमङ्गीकृत्य अभिन्नप्रदेशैरपि भेदद्विप्रदेशस्पर्शनं, तथा उपर्यधस्ताद्वा तत्रापि द्विपुद्गलस्पर्शनभेदादेव प्रदेशभेद इत्यतश्चत्वारः । तथा शेषद्वयमेकैकं स्पृशति । 'एगे भंते ! धम्मत्थिकायप्पएसे केवइएहिं पुट्ठो ? जहण्णपए तीहिं उक्कोसपए छहिं ।'

सर्व एवैष उद्देशकोऽन्यथा लिख्यते—जहण्णपयं बंभलोगं निक्खुडं जारिसं एतस्मिन्नेव निक्खुडे धम्मत्थिकायपएसो सो उवरिमेण पासेण धम्मत्थिकायपएसो जीयपरिमाणएहिं पुट्ठो अभिमुहे णव ।' एवं कृत्वा प्रदेशत्रयेण स्पृष्टः । उक्कोसेणं लोकनाडीमध्ये यः प्रदेशः धर्मास्तिकायस्य चतसृषु दिक्षु धर्मास्तिकायप्रदेशाः एक उपरि एकः अधः एवं समाः षट् । अधर्मास्तिकायैः पुनर्जघन्यपदे अस्मिन्नेव ब्रह्मलोकस्थाने चतुर्भिः स्पृष्टः कथम् ? । एकः

अपरोऽन्यः परतोऽभिमुखश्चान्यः अन्यः पुनस्तस्मिन्नेव धर्मास्तिकायप्रदेशे प्रविष्टोऽधर्मास्तिकायप्रदेश इति एवं सप्त संभवन्ति । एवमेत्राऽऽकाशप्रदेशे स्पृष्टः पुद्गलास्तिकायप्रदेशैरनन्तैः । 'एगेण वि से पुग्गले ऽगाढा' । जीवास्तिकायैरेवमेव । अद्धासमयपएसेहिं चिय । लोकनाडीमध्यात्परतः काल एव नास्ति तत्र न स्पृष्टः, मध्ये स्पृष्टः अनन्तैश्च । एवमधर्मास्तिकायप्रदेशः धर्मास्तिकायप्रदेशैर्जघन्यपदे तस्मिन्नेव ब्रह्मलोके स्थाने तथैव कार्यं सर्वत्र सर्वैः आकाशास्तिकायप्रदेशः धर्मास्तिकायप्रदेशैः स्यात्स्पृष्टः कथम् ? अलोके आकाशास्तिकायप्रदेशः न स्पृष्टः । यः स्पृष्टः स कियद्भिः स्पृष्टः ? जघन्येन १-२-३ उक्कोसओ |०|०| एरिसं णिक्खुडं दो अब्भंतरा एक, एकेन धर्मास्तिकायप्रदेशेन अलोकाकाशप्रदेशः स्पृष्टो बहिःस्थितः । दोहिं पुण यत्र इत्थंविधं बहिःस्थितः अलोकाकाशस्याऽऽकाशप्रदेशः । उपरितनस्य परिवर्त्तना नास्ति अतः धर्मास्तिकायप्रदेशो यस्तिर्यक्स्थः एतेनैकेन स्पृष्टः, बहिःस्थः यश्चोर्ध्वस्थान्तः धर्मास्तिकायप्रदेश एतेन स्पृष्ट इति द्वौ यदा पुनरीदृक् ०[० अलोकाकाशमेतत् । 'एगपएसिया एया सेढीए उक्कोसं तहिं लोकमध्ये षट्, तथैव सप्तमो मध्ये तस्मिन्नेवाकाशप्रदेशे प्रविष्टः एत्र अमी सप्त । एवमधर्मास्तिकायस्यापि आकाशास्तिकाय प्रदेशैः सर्वत्र स्पृष्टः यस्माल्लोके विद्यते, अलोके आकाशं तस्मात् सर्वत्र षट् । तथैव पुद्गलैरनन्तैः । 'एगेण विसे युगाहो' जीवप्रदेशैश्चानन्तैः एकाकाशप्रदेशैः जीवप्रदेशाः अनन्तधाऽवतिष्ठन्ते इति सञ्चरतो बहूनां जीवानां अद्धासमये हि स्यात् यस्मात् समयक्षेत्रमात्रे कालः परतः काल एव नास्तीति, यत्रास्ति तत्रानन्तैः एकः

पुद्गलास्तिकायप्रदेशः । धर्मास्तिकायैः कियद्भिः स्पृष्टः ? जघन्येन ४, उक्कोसं एकः परतः आराच्चैकः एकश्च सप्तकं पार्श्वे एते त्रयः परमाणुमध्ये चैकः एवममी चत्वारः । लोकमध्ये यः परमाणुः तत्र षट् दिशि स्थितः विदिशो नैव । अधश्चोपरि चैकैकः सप्तमः तस्मिन्नेव परमाणुमध्ये पुद्गलैरनन्तैः स्पृष्टः स परमाणुः । 'एगेण वि सेसे गाहा' जीवास्तिकायेनाऽप्येवमेव । 'अद्धासमये सिय जत्थत्थि तत्थ णियमो दो भंते पोग्गलत्थिका' यत्र एतयोर्मध्ये परमाणुरिति मन्तव्यः अन्योऽस्य परतः स्थितः एवं उवरिल्लो परमाणु धम्मत्थिकायपएसेण पुरतो बितेण पुट्ठोपरिल्लो य परतो द्वितीयेन, एवं दोच्चे पएसो मज्झि परमाणुत्ति ठवितो एयस्स अंते यिड्डं एवमवड्डिएण आइल्लस्स परिल्लस्स य दोहिं पुट्ठो एवं ४, अण्णे तंमि चेव दुपएसिए खंधे दुवेहिं अत्थिकायप्पएसा एवं छ, उक्कोसा बारसहिं ।

एवमवत्थियाणं जे मज्झे भवे परमाणवो एएसिं दुवे उवरि दुवे अहो दुवे एत्थ चेव एवं छ, अण्णे जे संगसाओ दोसु दिसासु दो दो अवरासु एक्केक्को एतेनवि छ, एवं बारसहिं धम्मत्थिकायपएसेहिं पुट्ठो एवं अहम्मत्थिकाय आगासत्थिकाएहिं वि, पोग्गलत्थिकाएहि अणंतेहिं अणंता, जम्हा अवगाहं तिण्णि अद्धासमएहिं वि । जे समयखेत्ते सो तेहिं पुट्ठो अणंतेहिं, बाहिं असंभवा ण पुट्ठो । एवमनया प्रक्रिययाऽयं स्कन्धः करणीयः

जघन्यपदे द्विगुणः स द्विकोत्तरो भवति, उत्कृष्टपदे पंचगुणो द्विरूपोत्तर एवं नेयः । जह० पएसिए दुगुणो वीसए दुरूवाविए बावीसा जघन्यपदे एतावद्भिः स्पृश्यते, उक्को० स एव स्कन्धः पंचगुणो द्विरूपोत्तराद् द्विपञ्चाशदेतावद्भिः स्पर्शं एवं नीयम् । एए जीवत्थिकायपएसे धर्मास्तिकायैः कियद्भिः स्पृष्टः ? जघन्यं ४ स्थापना— इहग्विधे प्रदेशे एकप्रदेशिकायां श्रेण्यामवस्थितो जीवप्रदेशः पूरयन्, एवमवस्थितस्यैको धर्मास्तिकायप्रदेशः आरादेकः परतश्चैकः यतो लोको यथा चतुष्कं पार्श्वेऽन्यश्च यस्मिन् जीवप्रदेशोऽवस्थितः एवं चत्वारः प्रदेशाः, उत्कृष्टेन सप्तभिः मध्ये स्थितो जीवप्रदेशः षट्सु दिक्षु अवस्थितैः स्पृष्टः जीवप्रदेशावस्थितेन च स्पृष्टः एवं सप्त एव । एवं सप्त एव अधर्मास्तिकायैरपि, पुद्गलैरनन्तैः ।

एकप्रदेशेऽनन्तानां जीवानां एकैकप्रदेशोऽवगाहमानः अनन्तप्रदेशतां याति । एगे अद्धासमये जह० ४ उक्कोसं ७, चतुर्णां संभवः समयक्षेत्रपर्यन्ते या श्रेणिः अन्या कालस्य तस्यामेकस्मिन् प्रदेशे यः प्रदेशः अद्धासमयस्य त्र्यमेत्रमवस्थितेन तेन चत्वारः, अन्यत्र सप्तैव, पुद्गलजीवास्तिकायैरनन्तैः कालसमयैश्चानन्तैः । 'धम्मत्थिकाए णं भंते ! के ! नत्थि एगेण वि' सर्वस्यैव धर्मास्तिकायप्रश्नः न चान्योऽस्ति द्वितीयो, येनास्य स्पर्शो भविष्यति । 'अधम्मपएसेहिं असंख्येयैः' यस्मात् लोकेऽवगाढः, अधर्मास्तिकायो लोकः असंख्येयप्रदेशिकः तस्मादसंख्येयैः स्पृष्टः । पुद्गलजीवास्तिकायैरनन्तैः कालप्रदेशैश्चानन्तैः । एवमेवाऽधर्मास्तिकायः आकाशास्तिकायश्च । पुद्गलजीवास्तिकायौ

स्वस्वस्थाने स्पर्शो नास्ति, अभावादन्यस्य । कालः यावन्मात्रः क्षेत्रः धर्मास्तिकायप्रदेशैः कियद्भिः स्पृष्टः ? असंख्येयप्रदेशत्वात्समयक्षेत्रस्य, एवं अधर्मास्तिकायः ; जीवास्तिकायस्य असंख्ये० सर्व एव जीवास्तिकायोऽसंख्येयप्रदेशिकः, जीवास्तिकायप्रदेशैरनन्तः एकस्मिन्नेवाऽऽकाशप्रदेशे अनन्तानां जीवप्रदेशानां संभवः, किं पुनः समयक्षेत्रमात्रेणाऽन्येन कालेन स्पृष्टः ? अन्यस्य कालस्याऽसंभवात् । यत्रैको धर्मास्तिकायोऽवगाढः तत्र कियन्तो धर्मास्तिकायस्यावगाढाः ? एकोऽपि नास्ति, अधर्माऽऽकाशयोरेकैकः पुद्गलस्यानन्ताः धर्मास्तिकायप्रदेशे आकाशप्रदेशेऽवतिष्ठन्ते, आकाशप्रदेशे चानन्तानन्तानामवगाहो विद्यते इत्यनन्तावगाढा जीवास्तिकायस्य चानन्ता एव, अनन्तानामेकैकोऽवगाढः अनन्तो भवति । कालः स्यात् यदस्ति तत्रानन्तैरेव धर्मास्तिकाय एवमधर्मास्तिकायः । यत्राऽऽकाशप्रदेशः तत्र कियन्तो धर्मास्तिकायप्रदेशाः अवगाढाः ? स्यात्, यो हि लोकान्ते चरमः आकाशप्रदेशवशात्तत्र धर्मास्तिकायस्यैक एव अलोकाकाशे यः प्रदेशः आकाशस्य तत्राऽसम्भवाद् धर्मास्तिकायस्येति नावगाढः, आकाशप्रदेशेनैक एव, जीवस्यानन्त एवमधर्मास्तिकायः । स्वस्वस्थानेऽवगाहो नास्ति, एवमाकाशास्तिकायः । यत्र एकः पुद्गलास्तिकायः प्रदेशः तत्र धर्माधर्माकाशानामेकैकः, पुद्गलजीवयोरनन्ताः । एवं जीवास्तिकायस्यापि कालो यत्रास्ति तत्राऽनन्ताः । यत्र द्विप्रदेशिकावगाढ स्कन्धः तत्र कियन्तो धर्मास्तिकायस्य ? स एको द्वौ वा । द्विप्रदेशिको यदा एकस्मिन्नाकाशप्रदेशेऽवगाढः तदा एक एव धर्मास्तिकायप्रदेशः, यदा पुनर्द्वयोरवगाढः तदा

धर्मास्तिकायस्यापि द्वौ एव, एवमधर्मास्तिकायस्याऽपि अवगाढाः, पुद्गलास्तिकायस्याऽनन्ताः द्विप्रदेशिको यत्राव-गाढः जीवास्तिकायस्यापि चानन्ताः प्रदेशद्वये अनन्तानां जीवानां प्रदेशद्वयं प्रदेशद्वयं संहरन्ननन्तीभवति तस्माद-नन्ताः । कालश्च यत्रास्ति तत्राऽनन्ताः । एवं यावद्दशप्रदेशिको यत्र तत्र कियन्तो धर्मादयः ? यदा दशप्रादेशिकः एकस्मिन्नाकाशप्रदेशेऽवगाहते तदा धर्मास्तिकायप्रदेश एकः । यदाऽऽकाशप्रदेशद्वयेऽवगाहते तदा द्वौ, ते यदा त्रिष्ववगाहते तदा त्रयः, चतुर्षु तदा चत्वारः एवं नेयम् । एवमधर्माऽऽकाशावपि । पुद्गलस्याऽनन्ताः, यद्यप्ये-कस्मिन्नवगाहते यदा तदाऽप्यनन्ताः पुद्गलाः यदापि द्वयोः किमुत दशसु यदा, जीवास्तिकायस्यापि एवमेव पूर्वभावनया । जत्थ संखेज्ज पएसिए तत्र कियन्तः ? यदा संख्येयप्रदेशिकः एकस्मिन्नाकाशप्रदेशेऽवगाहते, तदा एको धर्मास्तिकायप्रदेशः, द्वयोरवगाहते यदा द्वौ धर्मास्तिकायप्रदेशौ एवं नेयम्, यदा संख्येये अवगाहते तदा संख्येयाः प्रदेशाः, एवमधर्माऽऽकाशयोः । जीवपुद्गलयोरनन्ताः पूर्वभावनया, एवमसंख्येयानन्तावपि । यत्रैको जीवप्रदेशोऽवगाढः तत्र कियन्तो धर्मादयः ? धर्माधर्माऽऽकाशानामेकैकः, पुद्गलस्यानन्ताः, पूर्वभावनया, जीवस्य च एवं नेयः । 'जत्थ णं भंते ? धम्मत्थियाए ओगाढे' तत्र कियन्तो धर्मादयः ? धर्मास्तिकायः सर्वत्राऽस्ति समस्तप्रश्नोऽयं तस्मान्नास्ति अवगाहो धर्मास्तिकायप्रदेशानाम्, अधर्माऽऽकाशयोरसंख्येयः असंख्येयत्वात् लोकस्य, जीवानामनन्तत्वाल्लोके चावगाहनात्वाच्च जीवास्तिकायेनाऽनन्तो न स्पृष्टः, पुद्गलानां चानन्तत्वाद् लोकः पुद्गला-

नामाधार इति अनन्तैः स्पृष्टः पुद्गलास्तिकायैः । कालस्य च अनन्तत्वात् एवमनन्तैः स्पृष्टः । यत्रैकः पृथिवीकायिकः तत्र कियन्तोऽन्ये पृथिवीकायिका अवगाढाः ? असंख्येयाः, कथम् ? यस्मादभिहितं—

'जत्थ एगो तत्थ नियमा असंखेज्जा'

यस्माच्चासंख्येयाः, एवं पृथिवीकायिका नाऽनन्ताः । एकैकः पृथिवीकायिकोऽसंख्येयप्रदेशिकः लोकश्चासंख्येयप्रदेशिकः तस्य पृथिवीकायस्य, यथा प्रदेशः प्रदेशः प्रदेशैः यदा लोकस्य व्यवस्थाप्यते तदा लोकं व्यापयति । एवमनया प्रक्रियया यदा व्यवस्थाप्यन्ते असंख्येया अपि पृथिवीकायिकाः तदा आपन्नम्—'जत्थ एगो तत्थ नियमा असखेज्जा' एवमप्तेजोवायवः, वनस्पतीनामनन्तत्वाद्यत्रैको वनस्पतिकायस्तत्राऽनन्ता अन्ये । अनयैव प्रक्रियया व्यवस्थापयितुं दर्श्यते प्रत्यक्षम् · एत्थ णं लोए सव्वविग्गहिए विहो लक्खे' यदुक्तम्—सर्वलघुः तत्रसमः अधोमुखतडाक इव रत्नप्रभा 'सव्वथोवे तिरियलोए' यस्मात् तिर्यग्लोको अष्टादशयोजन शतानि, ऊर्ध्वलोकः सप्तरज्जुकः किंचिन्न्यूनः यस्मादसंख्येयगुणाः । अधोलोको यस्मादतिरिक्तो रज्जुकस्य इति, तस्माद्विशेषातिरिक्त इति ।

॥ इति त्रयोदशशतके चतुर्थोद्देशकः ॥

卐

## +अथ त्रयोदशशतके सप्तमोद्देशः—

किमात्मना एव भाषा उतान्या आत्मव्यतिरिक्ता ? आह च—आत्मव्यतिरिक्ता, अतिसृष्टत्वाद् अन्य-पुद्गलद्रव्यत्वाद्वा भाषा, अतः आत्मैव आत्मकायोऽन्यः को य इति । आत्माऽपि कायः कार्मणशरीरं प्रत्यात्मा एव कायः । औदारिकादन्यो योऽन्यस्तं प्रतीत्या—'णेरइय दव्वे वट्टमाणा जाइंता तं अवीचि' यदुक्तम्—

अनुसमयं प्रतिक्षणं विनश्यन्तीति । 'नेरइयदव्वो हि मरणे जं नेरइतो नेरइयदव्वे वट्टमाणो' यानि द्रव्याणि साम्प्रतं विनाशयन्ति तान्येव द्रव्याणि गृहीत्वा पुनरनागते काले विनङ्क्ष्यतीत्यर्थः, अवधिः सङ्केत इति शब्दार्थः । 'आइंतियमरणं' नारकस्य नारकद्रव्यवर्त्तमानस्य यानि द्रव्याणि अधुना गृहीत्वा विनश्यन्ति, न तान्येव द्रव्याणि पुनरेष्यत्काले गृहीतुं विनङ्क्ष्यतीत्यर्थः । वलयं—वलत् म्रियते, वसट्टं—कामभोगादिवशार्त्तः शब्दादिषु वा, अंतोसल्लं अनालोचितदोषस्य तद्भावमरणं तिर्यग्भवेत् ।

॥ इति त्रयोदशशतके सप्तमोद्देशकः‡ ॥

॥ समाप्तं च त्रयोदशशतकम् ॥

卐

टी० + पञ्चमषष्ठयोः न किमपि । टी ‡ अष्टम-नवम-दशमेषु न किमपि ।

## अथ चतुर्दशशतकम्—

### अथ चतुर्दशशतके प्रथमोद्देशकः—

'चरमं देवावासं वीतिक्कंते परमं देवावासं असंपत्ते' कः शब्दार्थः ? चरमं-अपरमं परं यदुक्तम्—आरात्स्थितं परमम्, आराद्ये तेभ्यः स्थितिमतिक्रान्तसौधर्मनिवासिनां सनत्कुमारमप्राप्तः मध्ये उत्पद्यते, स तं च परिणामं विराधयेत् ततः कर्मणो या लेश्या अशुभतरा वा तां प्रतिपतति। 'सीहा गती' शीघ्रा गतिः नारकाणाम्, नारकाः एकसामयिकाः द्विसामयिकाः तृतीये समये प्रथमसमयमेव ततः तिर्यकम्, ततः प्राक् ऊर्द्धं स्थाप्याङ्गुलीलोकनाडीबहिः स्थितस्तिर्यग्लोकमाद्यमुत्पद्यते, अधः एकेन समयेन समश्रेणिं गच्छति ततः द्वितीयेन लोकनाडिं प्रविशति तृतीयेन ब्रह्मलोकं गच्छति ततश्चतुर्थे ब्रह्मलोकनाडीबहिः कोर्प्परे उत्पद्यते स चतुर्भिः। यदा पुनः विश्रेणितः ब्रह्मणि तदा पञ्चमः। येषां प्रथमसमयो वर्त्तते उत्पन्नानामनन्तरोपपन्नास्ते, येषां द्वौ वा असंख्येया वा परंपरोपपन्ना ये ते विग्रहगतौ वर्त्तन्ते न तावदुत्पद्यन्ते ते अनन्तरपम्परा उत्पन्नाः प्रथमसमयोपपन्नकानामायुषो बन्धो नास्ति। यस्मादभिहितम्—

'सिय तिभागसेसाउया परभवियाउयं पगरेंति।' ये च विग्रहगतौ वर्त्तन्ते तेऽप्यायुष्का अबन्धका अणंतर

निग्गया पढमसमय उव्वट्टाइति जं भणियं—एवं परंपरं अनन्तरपरंपरंपि उव्वट्टा विग्रहस्थानं तावन्मनुष्येषु तिर्यक्षु वा उत्पद्यन्ते' अनंतरं खेदोववन्नगा'—खेदो-दुःखं दुःखोत्पन्नानां प्रथमसमयः ततः 'परंपरखेदोववण्णगा' विग्रहस्थानं तावद्दुखं वेदयन्ति नारकभवसम्भवमिति, एवं निर्गतौ अपि ।

॥ इति चतुर्दशशतके प्रथमोद्देशः ॥

卐

अथ चतुर्दशशतके द्वितीयोद्देशः—

यक्षाविष्टः उन्मादग्रहश्च । पज्जन्ने कालवासि' पर्जन्यः काले वर्षति इति यावदुक्तं भवति ।

॥ इति चतुर्दशशतके द्वितीयोद्देशः ॥

卐

अथ चतुर्दशशतके तृतीयोद्देशः—

'किं सत्थेणं अक्कमित्ता पभू अणक्कमित्ता पभू ?' यदुक्तम्—शस्त्रेण आहन्तुं खड्गादिना अनाहन्तुं वा ।

॥ इति चतुर्दशशतके तृतीयोद्देशः ॥

卐

## अथ चतुर्दशशते चतुर्थोद्देशः—

'जं समयं लुक्खीभूत्तं' यत्समयमेव रुक्षीभूत्वा तत्समयमेव पुनः स्निग्धो भवति स्निग्धरुक्षो वा पूर्वक्रियास्वभावात् तेन अन्यथा वा ? एवंभूते प्रश्ने,—'पुव्विं च णं करणेणं अणेगभावं परिणामं परिणमिति' पूर्वप्रयोगात् यो हि स्निग्धः येन वर्णपरिणामेन अद्धं परिणतः अनेकरूपेण तत्र यदा प्रविशति तदाऽनेकरूपं परिणाममसावपि परिणमति, अथ परिणामो निर्जीर्ण्णो विनष्टः तस्य स्कन्धस्य एकपरिणामं गतः तदाऽसावप्येकरूपतां परिणमति। 'परमाणुपोग्गले णं भंते ? किं चरिमे अचरिमे ?' यथा द्विप्रदेशिको विसंहरन् परमाणुभावं गतः एवं किमयमपि परमाणुर्विनाशं यास्यति ? न, इति द्रव्यादेशे न चरिमः सदा भविता न विनश्यति यावत्, क्षेत्रादेशात् क्वचित्तस्मिन् क्षेत्रे असंख्येयकालं स्थास्यति इति चरमः अन्यत्र न गच्छति इति अयमपि अस्ति परिणाम इत्यचरमः । एवं कालभावावपि ।

॥ इति चतुर्दशशतके चतुर्थोद्देशकः ॥

## +अथ चतुर्दशशतके षष्ठोद्देशकः—

'किं विचिचिरु' पृथग्भावे किंचिद् भक्षयन्ति किंचित्त्यजन्ति, यावता द्रव्यसमुदायेनाऽऽहारः पूर्यते स

टी० + पञ्चमे न किमपि ।

एकप्रदेशोनो वीचीत्यभिधीयते, अवीचि सर्वाणि नेमिप्ररूपकं चक्रवत् । अनीकं, नृत्यं गान्धर्वानीके ।

॥ इति चतुर्दशशतके षष्ठोद्देशः ॥

अथ चतुर्दशशतके सप्तमोद्देशः—

भक्तप्रत्याख्यातको मूर्च्छितः अथ समाध्यर्थं किंचित् तत्राऽमूर्च्छितः समास्वादयेदिति ।

॥ इति चतुर्दशशतके सप्तमोद्देशः‡ ॥

अथ चतुर्दशशतके नवमोद्देशः—

कर्मयोग्या लेश्या सा केवलिनः प्रत्यक्षा न छद्मस्थस्य, विमानलेश्यारूपिणी सह कर्मलेश्याभिः इति पृच्छति । 'अत्ता'—रमणीया—अनुमता इति यावत् शुभाशुभभेदभिन्ना वाऽत्र यावदिति ।

॥ इति चतुर्दशशतके नवमोद्देशः ॥

॥ परिसमाप्तं च चतुर्दशशतकम् ॥

‡ अष्टमे न किमपि ।

## अथ पञ्चदशशतकम्—

भगवच्छिष्याः पार्श्वस्थीभूताः दिशं चरन्तीति, यथा भगवतो वयं शिष्याः इति तमुपसम्पन्ना अष्टविधं निमित्तं, पूर्वेभ्यो व्यवच्छिद्य स्वयं कुर्वते 'से गयमेवं भंत' इत्यादि यदुक्तम्—ज्ञातं मयेदं यथा भगवतः प्रसादादयं न दग्ध इति। 'वणस्सइकाइया उवट्टपरिहार परिहरंति' यदुक्तम्—वनस्पतयः परिहृत्य परिहृत्य तस्मिन्नेवोत्पद्यन्ते, दैर्घ्येण पञ्चयोजनशतानि, अर्द्धं योजनं विष्कम्भः, पञ्चधनुःशतं चावगाहः, अनेन प्रमाणेन सप्त गङ्गा महागङ्गा भवति, सप्त सप्तगुणा यतः । 'एगं गासयसहस्सं सत्तरससहस्सा छच्च अउणापण्णासं गंगा सया भवंति' वपुःशिखा शकटिका धौतवस्त्रिका वस्त्रिकवपुःशिखरं धार्मिकपटोपकरणेन प्रत्युपकरोति, शुक्ली–विशुद्धः शुक्लाभिजातीयः-शुक्लानुवृत्तिः । गङ्गावालुकानां भृयन्ते मां गङ्गा, संज्ञिनां गर्भः संज्ञिगर्भः, अन्यत्यादि अन्यच्छरीरं प्रविशति, त्यक्त्वा अन्यस्मिन् शरीरे प्रविशामि, 'कडा'—प्रकृतयोग्याः, 'अन्नकूणाहत्थगते अंबहत्थगते' इति यदुक्तम्—

आम्रास्थिकं भूष[य]न् आतन्यनिकोदकं कुम्भकारस्य यद्भाजने स्थितम्, तेमनायमृन्मिश्रं, गोपृष्टकं गोपृष्टकाद्युत्पतितम्, 'हल्ला'—गोवालिका–तृणसमानवर्णकीटकविशेष इति । अट्ठ चरिमाइं पण्णवेति बोहिं सिद्धिं गच्छति । स चरमाङ्गेयादि करोति, न ममेदं वैक्रियम्, चरमभवे भवति, एवमादि अम्बकग्रहण मद्यपान गेयगात्र-परिपेकादिविधिरेवायम्, मैवं मंस्थाः यथायमवधिरिति । 'पत्तकं'—पिढरिकाविशेषः उपरिकृतं शीर्षके तदन्नतारयति

मुञ्चति वा, 'आहिंखरिया'—द्वयक्षरिका, अन्तश्चरी अभ्यन्तरिका द्वयक्षरिका पुनरुत्पत्ता इति ।

॥ परिसमाप्तं पञ्चदशशतकम् ॥

अथ षोडशशतकम्—

अथ षोडशशतके प्रथमोद्देशः—

'इंगालकारियाए णं भंते !' इङ्गालकारिका या सा अयोमयी राजकुलेषु भवति, चतुष्पदोऽपि उदुस्स गच्छति तस्यां केवति कालं संचिट्ठति, अधिकरणी लोहकारादीनां यत्र स्थापयित्वाऽयो हन्यते ।

॥ इति षोडशशतके प्रथमोद्देशः ॥

卐

अथ षोडशशतके द्वितीयोद्देशः—

'गाहावइउग्गहे'—गृहपतिर्माण्डलिको राजा । सूक्ष्मकायपमोह्य हस्तादिषु मुखे दत्त्वा जीवरक्षणार्थं तदाऽनवद्या, अन्यदा सावद्या । ॥ इति षोडशशतके द्वितीयोद्देशः ॥

卐

## अथ षोडशशतके तृतीयोद्देशः—

आत्मनः अभिग्रहप्रतिमास्थस्य, असिकातो अर्शांसि लम्बन्ते यच्छिनत्ति स शुभक्रियाबन्धकः वैद्यस्य छिद्यते धर्मान्तरायस्तु यस्य भवति स्थानव्याघातादि ।

॥ इति षोडशशते तृतीयोद्देशः ॥

卐

## अथ षोडशशते चतुर्थोद्देशः—

अन्नग्लानकः दोषान्नभुक् बुभुक्षिते झुरितः कः जिर्णिकः जटिलं व्याविद्धं वक्रं निशीथिकास्थानमात्रम् ।

॥ इति षोडशशतके चतुर्थोद्देशः ॥

卐

## *अथ षोडशशतके षष्ठोद्देशः —

तथ्यः संकल्पिका चिन्ता स्वप्नः प्रतानाकारः तद्विपरीतं जानीते स्वमारूढः सत्यं मृत्तिकास्थलमारूढः, अव्यक्तसुप्तः भावतोऽजागर्य्यैत्र, मिश्रा अपि अविरता सुप्ताः, विरताऽविरता मिश्राः, विरताः साधवः एवं सर्वे

* पञ्चमे न किमपि ।

छिन्नमिथ्यात्मानो मन्यन्ते । 'दामिणिं पाईण पडिणायतं' या एषा वत्सरूपाणां बन्धनी सा दामिनीत्यभिधीयते, स्वयमेव संवेल्लियामीति मन्यते एवं नेयः षष्ठः । ॥ इति षोडशशते षष्ठोद्देशः ॥

卐

## *अथ षोडशशतेऽष्टमोद्देशः —

'लोयस्स णं भंते ! पुरच्छिमिल्ले चरिमंते किं जीवे'त्यादि प्रश्नः नह्येकस्मिन् प्रदेशे जीवस्यावगाहोऽस्ति देशोऽस्ति कथम् ? चरमः—अन्तः एकप्रदेशिका श्रेणिः तत्र न माति असंख्येयप्रदेशत्वात्, एवं नोजीवे जीवप्रदेशादयस्तु सन्ति । जीवप्रदेशः एकेन्द्रियाणां गोलेषु एकेन्द्रियदेशाः, अथवा द्वीन्द्रियस्यैकेन्द्रियभाविनः उद्घातगतस्य देशः एकः, अथवा द्वीन्द्रियस्य देशाः द्वीन्द्रियाणां वा देशाः, अनीन्द्रियाः केवलिनः तेषां देशो नास्ति देशो महखण्डं जीवस्य, एवं द्वौ भङ्गौ उपरि यौ । चरमोऽन्त्यप्रदेशः लोकस्य द्वीन्द्रियप्रदेशो नास्ति एकः, किंकारणं नहि ? जीवस्य द्वीन्द्रियस्य प्रदेशः स्थापितः प्रदेशोऽल्पः देशो महान् संसारस्य यत्र प्रदेशः एकस्तत्राऽसंख्येया नियमात् द्वीन्द्रियप्रदेशा द्वीन्द्रियाणां च उत्तरौ द्वौ । केवलिनः दण्डेनाऽन्याऽपि प्रदेश आक्रान्तः एवं देशाः सन्ति, शरीरमात्रो दण्डः तेन ते बहवो देशाः एकेन्द्रियस्य तु देशो भवति एका सूची भवति तस्यान्ते उपरि एकेन्द्रियसिद्धाः

* सप्तमे न किमपि ।

सन्ति, न धर्मास्तिकायश्चरमान्ते सर्वव्यापित्वात्तस्य देशाः प्रदेशाश्च विद्यन्ते एवमधर्माकाशयोः उपरितनचरमान्ते एकेन्द्रियबाहुल्यात् एकेन्द्रियदेशाश्चातीन्द्रियप्रदेशस्याऽसम्भवः, कथं सम्भवः ? यस्मात्तत्र हि बहवोऽतीन्द्रियाः बहुत्वे च एकप्रदेशाऽसम्भवः, किं तर्हि बहुप्रदेशानां संभवः तस्मादभिदीयते—'एगिंदियदेसा य 'अणिंदियदेसा य' द्वीन्द्रियस्य न तत्र बहवो देशाः सन्ति, बहूनां पुनः पृथिवीकायिकत्वेनोत्पद्यमानानां समुद्घातगतानां संभवोऽस्ति मध्यविरहितः यावत्पञ्चेन्द्रियाः प्रदेशैः कदाचिद्, एकेन्द्रियप्रदेशाश्चातीन्द्रियप्रदेशाश्च स्युः ।' द्वीन्द्रियाणां पृथिवीकायिकेषूत्पद्यमानको नैव भवेत्, यदि भवति ततः प्रदेशाः, कथं पूर्वमभिहितो देशः ? देशे च बहवः प्रदेशाः स्युरिति, एवं यावत्पञ्चेन्द्रिया इति ।

॥ इति षोडशशतके अष्टमोद्देशः ॥

॥ परिसमाप्तं च षोडशशतकम् ॥

## अथ सप्तदशशतकम्—

### ×अथ सप्तदशशतके द्वितीयोद्देशः—

अन्यतीर्थिका ब्रुवते—प्राणातिपाते वर्त्तमानस्य अन्य एवातिपातं करोति, अन्य एवासौ जीवः यदुक्तं-

× टी॰ प्रथम-तृतीय-चतुर्थ-पञ्चम-सप्तमादिषु न किमपि ।

शरीरं विनाशयति न जीवो विनाशयति, सोऽन्तर्भूत आस्ते, न एतदेव य एवासौ जीवः तदेव शरीरं पर्यायास्तिकायनयोपदेशेन, इति कृत्वा य एवातिपातं करोति स एव जीवात्मा अहं एतं जाणामि अन्येषामरूपिणं भवति, अहं वेद्मि सकर्मकस्य वर्णगन्धरसस्पर्शानि ।

॥ इति सप्तदशशतके द्वितीयोद्देशः ॥

卐

अथ सप्तदशशतके षष्ठोद्देशः—

"किं पुव्वि संपाउणित्ता पच्छा उववज्जेज्जा" इत्यादि-'संपाउणत्तं' नाम पुद्गलग्रहणं गत्वा यत्करोति ।

॥ इति सप्तदशशतके षष्ठोद्देशः ॥

卐

॥ परिसमाप्तं च सप्तदशशतकम् ॥

## ॥ अथाष्टादशशतकम् ॥

### अथाष्टादशशतके प्रथमोद्देशः—

"जीवेणं भंते ! जीवभावेण किं पढमे अपढमे" अस्य जीवस्य यदेतद् जीवत्वं किम् ? इदं प्रथममेव नाऽस्य पूर्वमासीदुत अनाद्यमेवेति, आह भगवान्-न प्रथममेतत् अप्रथममनाद्यमिति यावत् । अनेन च लक्षण-गाथानुसारेण सर्वत्र भावना कार्या—

"जो जेण पत्तपुव्वो, भावो सो अपढमओ होइ । जो जं अपत्तपुव्वं, पावइ सो तेण पढमो उ ॥१॥

तथा चरमाचरमविचारे इयं गाथा—

"जो जं पाविहिंति पुणो, भावं सो तेण अचरिमो होइ । अच्चंतवियोगो जस्स, जेण भावेण सो चरिमो ॥२॥

नारको नारकभावेन प्रथमः अनादौ संसारे अनेकशो लब्धत्वादप्रथमः, यावद्वैमानिकाः । 'सिद्धे णं भंते ?' सिद्धभावेन प्रथमः, इदं हि सिद्धत्वं प्रथमलाभो जीवस्य नानेकशो लभ्यते इति प्रथमतो नाऽप्रथमः, बहुत्वेऽपि एवमेव । 'जीवे णं भंते ? आहारभावेणं किं ?' प्रथममेवेदानीमेवाऽऽहारयति, उतान्यभवेष्वपि आहारितवान् इति अत आह—न प्रथममप्रथममनादित्वाज्जीवस्य, अनाहारकश्च न संसरति संसारे अतो न प्रथममाहारयतीदानीम-प्रथमोऽस्याऽऽहारः । सिद्धानामाहारकप्रश्न एव नास्ति । 'अणाहारए णं भंते ! जीवे स्यात् प्रथमः, कथम् ? सिद्धः

अनाहारकभावेन प्रथमः शेषसत्त्वाः अप्रथमाः पूर्वमपि अनाहारका अभूवन् विग्रहकाले तस्मात् स्यात् । नारकादि-यावद्वैमानिकाः तावदप्रथमाः अनाहारकभावेन सिद्धाः प्रथमाः । जीवा णं अनाहारकत्वेन प्रथमाश्चाप्रथमाश्च सिद्धा अनाहारकभावेन प्रथमाः, शेषाः अप्रथमाः । भव्याऽभव्यभावेनाप्रथमाः नाधुना भव्यभावो जात इति अनादित्वा-द्भव्यभावस्य अप्रथमाः एवमभव्यत्वमपि । 'णो भव णो अभव' सिद्धास्ते हि सिद्धभावेन प्रथमाः । [संज्ञिभावेनाऽप्रथमाः अनेकशः संज्ञित्वं लब्धमिति, एवमसंज्ञिनोऽपि 'नो सण्णी नो असण्णी' सिद्धजीवमनुष्या अनेन भावेन प्रथमाः । सलेश्या अलेश्या, सलेश्याभावेन यावच्छुक्ललेश्याभावेन प्रथमाः,* ] नहि अलेश्याः पूर्वमभूवन् जीवास्ततस्सलेश्या जाता इति अप्रथमाः, अलेश्याः पुनर्जीवमनुष्यसिद्धाः प्रथमाः । सम्यग्दृष्टिजीवः [पु० नास्ति] सम्यग्दृष्टिभावेन स्यात्, सम्यग्दृष्टिः केवली सम्यग्दृष्टिजीवेन प्रथमः, सम्यग्दर्शनं पुनर्नकस्यचिद् अनादिरेव, सिद्धः सम्यग्दृष्टिभावेन प्रथमः । मिथ्यादृष्टिभावोऽनादिः तस्मादप्रथमः, सम्यग्मिथ्यादृष्टिः स्यात् यस्मान्मिथ्यादृष्टेः सम्यक्त्वभावं गतस्य सशेषेषु मिथ्यात्वपुद्गलेषु भवति तच्च केनचित् प्रथममेव लब्धं, कश्चिद् बहुशो लब्धमिति स्यात् । जीवः संयतभावेन स्यात् कस्यचित् प्रथमलाभ एव संयतत्वस्य भवति केनचिद् बहुशो लब्धमिति स्यात्, मनुष्याणामपि जीवस्याऽसंयतभावो प्रथमः, संयतासंयतभावः स्यात् यदुक्तम्—श्रावकस्य च कस्यचित्प्रथमः कस्यचिदप्रथमः, नोसंयत नोअसंयतभावः प्रथमो जीवसिद्धानाम् । सकषायभावो यावल्लोभकषायभावः अप्रथमः, नहि

* पु० अधिकम् ॥

अकषायः संसरति संसारे तस्मादप्रथमः । अकषायभावो जीवमनुष्याणां स्यात्, यस्य प्रथमश्रेणीलाभः तस्य प्रथमोऽकषायलाभः, यस्य पुनर्द्वितीयश्रेणिलाभः तस्याऽप्रथमः, सिद्धानां सिद्धः अकषायभावः प्रथमः । जीवानां ज्ञानित्वं केषांचिदनादिः यथा येषां सम्यक्त्वं मिथ्यादृष्टीनां सम्यक्त्वगतानां सादिस्तस्मात्स्यात् यावद्वैमानिकाः, सिद्धाः केवलज्ञानभावेन प्रथमाः, ज्ञानचतुष्के कश्चित्प्रथमः कश्चिदप्रथम इति, पृथक्त्वे प्रथमाश्च केवलज्ञानिनः प्रथमास्तेन भावेन । 'अण्णाणी नो अण्णाणी' अज्ञानिभावेन प्रथमाः सयोगी जीवः सयोगिभावेनानादित्वादप्रथमः, अयोगिजीवमनुष्याः सिद्धाः अयोगिभावेन प्रथमाः । साकारोपयुक्ताः जीवसिद्धाः द्रष्टव्याः । सवेदका सवेदकभावेनाऽप्रथमाः अवेदकस्य संसृतिरेव नास्ति एवं यावन्नपुंसको वेदः यथा कषायी शरीरभावेनाऽप्रथमः, अशरीरिणः संसाराऽभावात् । आहारकशरीरी स्यात्—यस्य प्रथमलाभः आहारकशरीरस्य स प्रथमः, यैर्लब्धमन्यदाऽपि अप्रथमाः । पञ्चपर्याप्तिभिः पर्याप्तकाः पंचभिरपर्याप्तिभिरपर्याप्तकाः अप्रथमाः जीवस्याऽनादित्वादस्य भावस्य । 'जीवे णं भंते ! जीवे भावेणं किं चरिमा अचरिमा' इति प्रश्नः—किमयं जीवः जीवभावे न विनाशं यास्यति इति चरमः, चरमस्य वा जीवत्वमाहोश्वित् पुनरपि जीवभावमनुभविष्यतीत्यचरमः, अत आह—अचरिमो न चरमः । नारकाः नारकभावेन किं चरिमाः स्यात् ? (स्युः) यो हि नारको नारकत्वादुद्वृत्त्यं मनुष्यगतिमासाद्य सिद्धिं यास्यति न पुनर्नरकगतिम्, स चरिमो नारकः, यः पुनरपि यास्यति सोऽचरिमः, एवं यावद्वैमानिकाः । सिद्धः सिद्धिभावेनाऽचरमः, न हि सिद्धस्य सिद्धत्वं विनाशमुपगच्छतीति ।

नारकाःनारकभावेन चरमाश्चाचरमाश्च, केचिच्चरमाः केचिच्चाचरमा इत्यभिधीयन्ते । चरमाश्चाचरमाश्च यावद्वैमानिकाः ।

जीवाः आहारकभावेन स्यात्—सिद्धान् प्रतीत्य चरमाः शेषान् प्रतीत्याऽचरमाः । जीवाः अनाहारकाः अनाहारकभावेन स्यात्-सिद्धाः अनाहारकभावेनाऽचरमाः नहि सिद्धाः पुनराहारिष्यन्तीति, शेषाः चरमाः विग्रहगतौ अनाहारकाः पुनश्च ग्रहीष्यन्तीति आहार चरमाः । भव्या भव्यज्ञानचरमाः भव्यानां सिद्धत्वं, चरमभावः, अभव्याः अचरमाः नहि अभव्याः भव्या भवन्तीति अचरमाः ।

'णो भव णो अभवसिद्धी' सिद्धास्ते सिद्धाभावेनाऽचरमाः । संज्ञिनां भव्यानां संज्ञिभावश्चरमः, अभव्यानामचरमस्तस्मात् स्यात् ।

असंज्ञिनां भव्यानां असंज्ञिभावश्चरमः, अभव्यानामचरमः, 'णो सण्णी णो असण्णी' सिद्धास्ते अनेन भावेनाचरमाः । 'सलेस्सा'—सलेश्याभावेन स्यात्-ये भव्यास्ते निवृत्तिकाले चरमाः, अभव्याः पुनरचरमा इति ।

अलेश्याः-सिद्धास्ते अलेश्याभावेनाऽचरमाः, नहि सलेश्यतां पुनर्यास्यन्तीति । सम्यग्दृष्टयः—केवलिनः तेन सम्यग्दृष्टिभावेनाऽचरमाः, शेषाः सम्यग्दर्शनवन्तो यदा सम्यग्दृष्टित्वं गतास्तदा चरमाः तस्मात् स्यात् । मिथ्यादृष्टिभावेनाऽभव्योऽचरमः भव्यश्चरमः ।

सम्यग्मिथ्यादृष्टिर्जीवस्तेन भावेन चरमः नह्यसौ भावावस्थितो भवति, जीवस्य नारकादिः पुनर्यः सम्यग्मिथ्यात्वं न यास्यति स चरमः पुनरपि यास्यति सोऽचरमः । संयतो जीवः संयतभावेन स्यात् चरमः, कथम्? तेन यदा तदा सिद्धिं यातव्यमिति, तच्चरमत्वमस्य मनुष्ये स्यात्-कश्चिन्मनुष्यः चरमः यस्तेनैव भवेन सिद्धिं यास्यति, प्रतिपतितो यः पुनर्विमुच्य यास्यति सोऽचरमः योऽन्यदा भवे यास्यति । असंयतः असंयतभावेन स्यात्—यो ह्यभव्यः असंयतः सोऽचरमः, भव्यः चरमः ।

जीवस्य संयताऽसंयतभावश्चरमः—कथम्,—संयतासंयतेनाऽवश्यं यदा तदा संयतेन भाव्यमिति चरमः तिर्यग्मनुष्यो वा संयतासंयतः यदा संयतत्वं यास्यति तदा चरमः, यदा नैव संयतत्वमाप्नोति इत्यचरमः, 'णो संयत णो असंयत'—सिद्धः अनेन भावेनाऽचरमः । सकषायी—यावल्लोभकषायी भव्यः सकषायित्वेन चरमः अचरमो भव्यः, अकषायी—जीवः अकषायिभावेनाऽचरमः न तस्य कषायितां पुनर्भविष्यतीति सिद्धस्येव ।

'अण्णाणी'—भावेन स्यात्-अभव्यान् प्रतीत्य मूनभावोऽचरमः भव्यान् प्रतीत्य चरमः । सम्यक्त्वं प्रतिपन्नानस्य ज्ञानी ज्ञानिभावेन स्यात्-केवलज्ञानी चरमः शेषज्ञानिनो ये मिथ्यात्वं न गच्छन्ति ते अचरमाः, आभिनिबोधिकज्ञानी यः पुनरपि लभ्यते अचरमः स, न लभ्यते यः स चरमः द्रष्टव्यः । केवलज्ञानी केवलज्ञान भावेनाचरमः न पुनः केवलभावो विनाशं यास्यतीति ।

सयोगिनां सयोगिभावः स्यात्—केवलिनः सिद्धभावं प्रतीत्य चरमः, अन्यसत्त्वानामचरमः यावत् काययोगी। सवेदकस्य सवेदकभावः स्यात्—क्षीणमोहस्य सवेदकभावश्चरमः शेषाणामचरमः केवलिनः सिद्धस्य वा यथा। शरीराशरीरभावेन स्यात् केवली शरीरभावेन च मः, शेषसत्त्वाः अचरमाः, आहारकशरीरभावेन।

जीवः पर्याप्तिकभावेन स्यात्—सिद्धं प्रतीत्य पर्याप्तिकभावेन चरमः अन्यान् प्रतीत्याऽचरमः। सेयं भंते।

## ॥ इति अष्टादशशतके प्रथमोद्देशः ॥

卐

## *अथाष्टादशशतके तृतीयोद्देशः—

'सव्वं मारं मरमाणस्य' अपश्चिममरणमिति यावत्। 'चरमं मारं मरमाणस्स' चरमस्य मरणं न पुनर्मरिष्यति इति।

## ॥ इति अष्टादशशतके तृतीयोद्देशः ॥

## अथाष्टादशशतके चतुर्थोद्देशः—

प्राणातिपातो जीवपरिभोगः कथम्?—जीवः यदा शरीराद्वियोगयति तदाऽस्य वियोगपरिभोगो भवति,

टी * द्वितीय पञ्चम-षष्ठ-सप्तमाष्टमनवमेषु न किमपि।

जीवस्य विरतिरूपात्तेनाऽस्य परिभोगो नास्ति द्रव्यस्य परिभोगो नाऽद्रव्यस्य ।

'नेरइयाणं किं कडज्जुम्मा' प्रश्नः यदुक्तम्—ये नरका नरकेषु वर्त्तन्ते तेषां यदा चतुष्कोऽपहारः क्रियते किं चत्वार एव शेषनारकाः भवन्ति ? आहोस्वित् त्रयः ? द्वौ एको वा ? आह—जघन्यपदे चत्वारः, उत्कृष्टपदे त्रयः शेषा मध्यमावस्थायां चत्वारः त्रयः द्वौ एको वा ।

## ॥ इत्यष्टादशशतके चतुर्थोद्देशकः ॥

## अथाष्टादशशतके दशमोद्देशः—

'परमाणुपोग्गले णं भंते ? वायुयाएणं फुडे' वायुः परमाणुना स्पृष्टः, न वायुः परमाणुं स्पृशति अप्रदेशत्वात्परमाणोः वायोश्च सप्रदेशत्वात् असंख्येयप्रदेशिकस्कन्धः वायुं न स्पृशति समस्तं यस्मात् परिमितो वायुर्गृहीतः परिमितं चाऽसंख्येयप्रदेशिकत्वमपरिभितस्य परिमितेन कथं स्पर्शो भविष्यति इति । बस्तिर्वायुना स्पृष्टः, न बस्तिना वायुः स्पृष्टः, योऽतस्थो वायुस्तस्य देशाः स्पृष्टाः यं तेन सर्वे स्पृष्टा इति ।

## ॥ इत्यष्टादशशतके दशमोद्देशः ॥

## ॥ परिसमाप्तं चाष्टादशशतकम् ॥

## ॥ +अथैकोनविंशतितमं शतकम् ॥

### अथैकोनविंशशतके तृतीयोद्देशः—

'चिन्ने वा से उद्दाइ पलिस्सप्पति वा' ये चिताः पुद्गलादुद्भवतो अपह्रियन्ते अपगच्छन्ति यावत् । परिसप्पति,—परि–समन्ततो भावे 'गम्लसृप्लगतौ' परिसर्पति समन्ततो गच्छति । 'पाणाइवाए उवक्खाइज्जंति' प्राणातिपाते आख्यायन्ते, यथा प्राणातिपातिनस्ते 'ते सिं पि य णं जीवाणं णो विन्नाए णाणत्ते' न विज्ञातमेतद्यथा जीवा नानात्वेन वर्त्तन्ते, पृथग्व्यवस्थितास्ते जीवाः किं तर्हि ? एकव्यवस्थिता एव, तस्मात्तेऽपि हि प्राणातिपातिनः ।

॥ इति एकोनविंशशते तृतीयोद्देशः ॥

卐

## ॥ परिसमाप्तं च एकोनविंशं शतम् ॥

टी० + प्रथमद्वितीयचतुर्थपञ्चमषष्ठसप्तमाष्टमनवमदशमेषु न किमपि, तृतीये एव किञ्चिदस्ति ।

## ॥ अथ विंशतितमं शतकम् ॥

†अथ विंशतितमशतके पञ्चमोद्देशः—

"वीसइमसउद्देसे, चउप्पएसाइए चउप्फासे । एगबहुवयणमीसा, बीयाइया कहं भंगा ? ।१॥

देसो देसा व मया, दव्वक्खेत्तवसओ विवक्खाए । संघायभेयतदुभय,—भावाओ वा वयणकाले ॥२॥"

एषा लक्षणगाथा सर्वत्रानया भावना कार्या—दुदेसिए दुवण्णो सियकालए एककालको नीलकश्चैकः । एवं नेयं सव्वेसिं सर्व एव सितः द्वौ अपि प्रदेशौ तौ, एकः पुनः स्निग्धः एको रुक्षः, अथवा सर्व एव उष्णः । द्वावपि प्रदेशौ यदुक्तम्—एकः स्निग्धः रुक्षश्चैकः अथवा सर्व एव स्निग्धः द्विप्रदेशिकः । एकः शीतः उष्णश्चैकः अथवा सर्व एव रुक्षः । एकः शीतः परमाणुरेकः उष्णः । यदा चतुःस्पर्शः तदा एकःशीतः एकः उष्णः एकः स्निग्धः एकः रुक्षः । त्रिप्रदेशिकः 'सिय कालए य नीलए य' यदा एकः कृष्णःद्वौ अन्यौ एकपरिणामपरिणतौ तदा एकवचनं नील एव, यदा पृथग्भूता गृह्यन्ते तदा कालकाश्च नीलकश्च यदा द्वौ कालकनीलकपरिणामपरिणतौ च गृह्यते तदा कालकश्च नीलकाश्च कालका नीलकाश्चेति नास्ति भङ्गः स्वस्मान्नीलकस्य द्वितीयो नास्ति तेन नीलका इति न भवत्येवं नेयः सर्वे वर्णे । यदा त्रिवर्णः तदैककालकालकः द्वितीयो नीलकः तृतीयो लोहितः, एवं नेयाः वर्णगन्धरसाश्च । यदा त्रिस्पर्शः सर्वशीतः सर्व एव

टी० † प्रथमादिचतुर्थान्तेषु न किमपि ।

त्रिप्रदेशिकः स्कन्धः शीतः देशः स्निग्धः त्रिप्रदेशिकस्य देशः परमाणुः स स्निग्धः, द्वौ अन्यौ एकपरिणामपरिणतौ गृहीतौ तस्माद्देशो रुक्षः सर्व एव शीतः देशपरमाणुः स स्निग्धः द्वावन्यौ पृथग्भूतावत्र गृहीतौ तस्माद्देशा रुक्षाः अन्य एवंप्रकारको भवेत् । अथवा सर्व एव शीतः देशाः स्निग्धाः द्वौ परमाणू । यदुक्तं—देशो रुक्षः एकः परमाणुरेवंप्रकारोऽन्यो भवेत् स्कन्धः । एवमुष्णेनाऽपि त्रयः, एवं ते यः यदा चतुस्पर्शः देशौ शीते एकपरमाणुः द्वौ अन्यौ एकपरिणामपरिणतौ एकवचनं, देशः उष्णः देशः स्निग्धः एक एव परमाणुः तौ एत्र एकपरिणतौ देशो रुक्षः एवं प्रकारो वा भवेत्स्कन्धः । अथवा तथैव नवरं देशा रुक्षा योऽसौ एकपरिणामपरिणतः पूर्वं गृहीतो हि सोऽधुना पृथग्भूतो गृहीतः इदानीमाद्यौ द्वौ स्निग्धौ अन्यो रुक्षः, अथवा प्रथमः शीतः द्वितीयतृतीयौ उष्णपरिणामौ, प्रथमः स्निग्धः द्वितीयतृतीयौ एकपरिणामौ देशो रुक्षः, एवंविधो वा भवेत् । अथवा प्रथमः शीतः द्वितीयतृतीयौ उष्णौ प्रथमः स्निग्धः द्वितीयतृतीयौ पृथग्भूतौ अत्र तस्माद्देशा रुक्षाः एवंविधो भवेत् । अथवा प्रथमः शीतः द्वितीयतृतीयौ उष्णौ प्रथमद्वितीयाः स्निग्धाः तृतीयो रुक्षः एवंविधो वा । अथवा प्रथमद्वितीयाः शीताः तृतीयः उष्णः प्रथमः स्निग्धः अन्यौ एकपरिणामपरिणतौ द्वितीयौ इति देशो रुक्षः, आद्यौ शीतौ उष्णोऽन्त्यः आद्यः स्निग्धः अन्त्यो रुक्षः । अथवा आद्यौ शीतौ उष्णौ स्तः आद्यौ स्निग्धौ अन्ते रुक्षः ।

चतुःप्रदेशिकः यदा द्विवर्णः द्वौ एकपरिणामपरिणताविति, 'कालए य नीलए य' अन्त्यो यदा पृथग्भूतो

गृह्यते तदा नीलका य, यदा आद्यौ पृथग्भूतौ अन्त्यौ एकीभूतौ तदा कालका य नील एव, यदा आद्यौ पृथग्भूतौ अन्त्यौ वा तदा कालगा य नीलगा य एवं नेयम् । यदा त्रिवर्णः प्रथमः कालकः द्वितीयो नीलकः अन्त्यौ एकपरिणतौ इति लोहितकः, अथवा प्रथमः कालकः द्वितीयो नीलकः अन्त्यौ लोहितकौ, अथवा आद्यः कृष्णः मध्यौ नीलकौ अन्त्यो लोहितकः, अथवाऽऽद्यौ कृष्णौ, तृतीयो नीलः चतुर्थो लोहितः एवं नेयम् । यदा चतुर्वर्णस्तदा प्रथमः कालकः द्वितीयो नीलकः तृतीयो लोहितकः चतुर्थो हारिद्रः एवं नेयम् । एवं यथासम्भवं गन्धरसस्पर्शाः, यदा त्रिस्पर्शः सर्व एव शीतः यदुक्तम्—चत्वार एव शीताः, देशः स्निग्धः आद्यौ द्वौ एकपरिणामपरिणतौ, देशो रुक्षः अन्त्यौ द्वौ एकपरिणतौ गृहीतौ । अथवा सर्व एव शीतः देशः स्निग्धः आद्यौ एकपरिणामपरिणतौ देशा रुक्षाः अन्त्यौ पृथग्परिणामपरिणतौ अत्र गृहीतौ ।

अथवा सर्व एव शीतः आद्यौ स्निग्धौ पृथकपरिणतौ अन्त्यौ एकपरिणतौ देशो रुक्षः, उभौ अपि पृथक्परिणतौ यदा तदा देशाः स्निग्धाः देशाः रुक्षाः सर्व एव शीतः सर्व एव स्निग्धः । अथवा आद्यास्त्रयः एत एव सर्वश्च रुक्षः, एवं नेयम् । अनया भावनया सर्वमेवमुह्यम् । सेवं भंते ।

॥ इति विंशतितमशतके पञ्चमः पुद्गलोद्देशकः समाप्तः ॥

卐

†अथ विंशतितमशतके अष्टमोद्देशः—

'एएसि णं भंते चउवीसाए तित्थगराणं तेवीसं अंतरा'

ऋषभाद्यानि अष्टौ जिनान्तराणि यानि चाऽष्टौ अन्ते यावत् वर्धमानस्वामी, अत्र कालिकसूत्रस्य व्यवच्छेदः ...न मध्ये सप्तव्यवच्छेदः । तत्र किं तीर्थम् ? तीर्थमुत तीर्थकरस्तीर्थं वाक्यार्थः, किं चातुर्वर्ण्यः सङ्घः तीर्थमुत तीर्थंकर ! इति ।

॥ इति विंशतितमशतकेऽष्टमोद्देशः ॥

卐

†अथ विंशतितमशतके दशमोद्देशः—

'नेरइया णं आओवक्कमे णं उववज्जंति' इति—नारकाः आत्मनात्मानं विनाश्योत्पाद्यन्ते ? परेण वा विनाशिता उत्पद्यन्ते ? अवश्यमेव चायुषः क्षयात् तस्मात् तिर्यग्मनुष्याः सोपक्रमाश्च निरुपक्रमाश्च विद्यन्ते तस्मात् त्रितयमेपि सम्भवति, तिर्यग्मनुष्याणां वोपपातस्तत्र निरुपक्रमाश्चक्रवर्त्यादय इति ।

॥ इति विंशतितमशतके दशमोद्देशः ॥

॥ परिसमाप्तं च विंशतितमं शतकम् ॥

† षष्ठसप्तमयोः न किमपि । नवमेऽपि च न किमपि ।

## ॥ अथ एकविंशतितमं शतकम् ॥

'मूले कंदे खंधे तया य साले पवाल पत्ते य । सत्तसु वि धणुपुहुत्तं, अंगुलमो पुप्फ फल बीए ।१॥"
१ २ ३ ४ ५ ६ ७ ८ ९ १०

एतद्गाथानुसारेण सर्वं भावनीयम् इति ।

## ॥ परिसमाप्तं च एकविंशतितमं शतकम् ॥

卐

## अथ द्वाविंशतितमं शतकम्—

"पत्त पवाले पुप्फे फले य बीए य होइ उ उववाओ । रुक्खेसु सुरगणाणं, पसत्थरसवन्नगंधेसु ।१।"

## ॥ परिसमाप्तं च द्वाविंशतितमं शतकम् ॥

卐

## +अथ चतुर्विंशतितमं शतकम्—

### ॥ अथ चतुर्विंशतितमशतके त्रयोदशोद्देशः—

"से णं भंते पज्जत्ता सण्णी पंचिंदियतिरियरयणप्पभा पुढविनेरइए पुण असण्णी केवइयं कालं सेवेज्जा ? केवइयं कालं गतिं आगतिं करेज्जा ? भवादेसेणं दो भवा—एकस्मिन् संज्ञी, द्वितीयो नारकः, ततो निर्गतः सन् संज्ञित्वं लब्ध्वा सिद्धिं यायात्, न पुनरसंज्ञित्वं न च नारकत्वम् । कालतः जहण्णेणं अन्तर्मुहूर्त्तमसंज्ञिषु ततो नरकेषु दशवर्षसहस्राणि, ततः संज्ञिषूत्पातो नाऽसंज्ञिषु नारकेषु वा तस्मात् सिद्धिं यायात् । उत्कृष्टेन पूर्वकोटिं स्थित्वा असंज्ञिषु ततः पल्योपमासंख्येयभागं नारकेषु स्थित्वा ततः संज्ञिषु ततः सिद्धः । तेषां प्रथमायां षड्विधसंहनिन उत्पद्यन्ते, तृतीयाया आरभ्य परिहीयते संहननम् । सप्तम्यां वज्रऋषभनाराचसंहनिन उत्पद्यन्ते । 'भवादेसेणं—[जह०] तिन्नि भवा उक्कोसत्ता—एकः संज्ञिषु भवः, द्वितीयो भवो नरकेषु, तृतीयः पुनः संज्ञिषु एव ततः सिद्धिः, अनया एव प्रक्रियया सप्त भवाः—एकः संज्ञिषु, ततो नारकेषु एवं सप्त यावदपश्चिमं संज्ञिषु ।

कालादेसेणं जहण्णं-अन्तर्मुहूर्त्तं संज्ञिषु ततो नरकेषु द्वितीयोऽन्तर्मुहूर्त्तः पुनः संज्ञिषु एवं द्वौ अन्तर्मुहूर्त्तौ

---

+ त्रयोविंशतितमे शतके न किञ्चिदपि । चतुर्विंशतितमे शतके-प्रथमाद्यद्वादशान्तशतकेषु न किञ्चिदपि ।

द्वात्रिंशतिश्च सागरोपमानाम्, उत्कृ॰—पूर्वकोटी संज्ञिषु द्वात्रिंशतिः सागरोपमाणि नरकेषु, एवं भवत्रयं नरकेषु, ततः त्रिगुणा द्वात्रिंशतिः षट्पष्टिर्भवति। अन्तर्मुहूर्त्तः चतुर्गुणः चत्वारो भवाः संज्ञिषु इति ततः सिद्धिरेवं नेयम्। अत्राऽपि गतिरागतिश्च कार्या—पृथिवीकायिकानां पृथिवीकाये भवादेशेनाऽष्टौ भवाः, कालादेशेन—छावत्तरवाससयसहस्सं (१७६००० ) द्वाविंशतिवर्षसहस्राणि अष्टभवगुणितानि एतावान् भवति कालराशिः।

यदा अप्कायिकः पृथिवीकायिकेषूपपद्यते तदा गतिरागतिरष्टौ भवाः कालादेशः षोडशोत्तरवर्षशतसहस्रं चत्वारो भवाः पृथिवीकायिकेषु इति चतुर्गुणा स्थितिः स्वका जाता ८८००० अप्कायिकेष्वपि चत्वारो भवाः सप्तवर्षसहस्रस्थितिश्चतुर्गुणाः जाता २८००० उभावपि एकीकृतौ जातं षोडशोत्तरवर्षशतसहस्रं—११६०००। यः पुनर्वनस्पतिकायिकानां पृथिवीकायिकेषूपपातः तदा भवादेशेनाष्टौ भवाः, कालादेशेन—अष्टाविंशत्युत्तरं शतसहस्रम्—चत्वारो भवाः पृथिवीकायिकेषु इति चतुर्गुणा पृथिवीकायिका स्थितिः ८८०००, वनस्पतिषु चत्वारो भवाः अपश्चिमस्तु वनस्पतिष्वेव तेन चतुर्गुणा वनस्पतिस्थितिः। उभयावपि एकीकृतौ १२८०००।

यदा द्वीन्द्रियस्तदा भवादेशेन—अष्टौ भवाः, कालादेशेन—पृथिवीकायिकेषु चत्वारो भवा इति चतुर्गुणा स्थितिः, द्वीन्द्रियेषु च द्वादशसंवत्सराणि स्थितेश्च चतुर्गुणसहिता ८८००० संवत्सराणि चाष्टचत्वारिंशत्।

त्रीन्द्रियाणां भवादेशेन–अष्टौ, कालादेशेन–पृथिवीकायिकेषु चत्वारो भवाः तेन चतुर्गुणा ८८०००, त्रीन्द्रियेष्वपि चत्वारो भवाः तेषां च स्थितिः एकोनपञ्चाशत् रात्रिंदिवा तेन चतुर्गुणानि १९६ जातानि–मिलने अष्टाशीतिश्च वर्षसहस्राणि षण्णवत्यधिकशतरात्रिंदिवानि गतिरागतिः कालः, अतः परं नास्ति । यस्मास्स्थानात् गतिरागतिर्येन सह स चिन्त्यते तत्र यत्पूर्वस्थानं स प्रथमो गण्यते भवः ।

॥ इति चतुर्विंशतिशतके–द्वादशाद्यविंशतिपर्यन्तोद्देशकाः ॥

卐

अथ चतुर्विंशतितमशतके एकविंशतितमोद्देशकः—

तओ चउवीसतियसतस्स एक्कवीसमे उद्देसए लिहिज्जइ वत्तवया, तहेव नवसु वि गमेसु नवरं ततीय–छट्ठ-णवमेसु गमेसु सुण, के पुण नव गमा ? ओहिएसु उहि जहण्णेसुओ उक्कोसु अगहंओ जह जउओ सोउ जउओ ततीय छट्ठ नवमेष्विति बावीसवाससहस्स ट्ठितिता समुच्छिममणुस्से सुणोववज्जति इति ।

॥ इति चतुर्विंशतितमशतके एकविंशतितमाद्यचतुर्विंशतितगान्तोद्देशकाः ॥

卐

॥ परिसमाप्तं च चतुर्विंशतितमं शतकम् ॥

## अथ पञ्चविंशतितमं शतकम्—

### अथ पञ्चविंशतितमशतके प्रथमद्वितीयोद्देशकौ—

"सुहुमा बादर बेइंदिया य, तेइंदियाय चउरिंदि । असण्णी सण्णी वि य, चोद्दस पज्जत्तापज्जत्ता ॥१॥"

पूर्वांलितमिह द्रष्टव्यम् । 'जीवेणं भंते जाइ दव्वाइं ओरालियसरीरत्ताए गेण्हइं ताइं किं ठियाइं अठि-याइं गेण्हइ' यदुक्तम्—

तान्येकीभूतानि किं गृहणाति ? जीवेन सह उत पृथग्भूतानि एव ? उच्यते—द्विविधामपि तैजसस्य स्थितानि नहि अपूर्वाणि गृहणाति, तैजसेनाऽविरहितानि नहि अपूर्वाणि गृहणाति, नाऽस्थितानि इति ।

॥ इति पञ्चविंशतितमशतके प्रथमद्वितीयोद्देशकौ ॥

卐

### अथ पञ्चविंशतितमशतके तृतीयोद्देशकः—

परिमण्डलं संस्थिताः स्कन्धाः किं सं० असं० अणं० ? अनन्ता इति । 'तत्थ णं जे से ओयपएसिए

से जहण्णेण वेयतरवट्टे से' एवं पञ्चपञ्चप्रदेशेषु अवगाढः उत्कृष्टोऽनन्तप्रदेशिकमसंख्येष्वेवावगाढः यस्मादसंख्येय-प्रदेशिकः लोकः । जुम्मपएसिए युग्मप्रतरं वृत्तमेतत्, घनवृत्तमोजमस्य मध्यपरमाणोरुपर्येको मुक्तः अधश्चैक एवं सप्तप्रदेशिकं घनवृत्तं जघन्यम् । उक्कोम० अस्य येष्ववगाढं असंख्येयप्रदेशत्वाल्लोकस्य च, युग्मप्रदेशं घनवृत्तं अन्यदेवं-विधमेव प्रतरमुपरि न्यस्तं जाताः प्रदेशाः २४ । पुनरुपरि मध्यमेषु न्यस्ताश्चत्वारस्तेष्वेव वाचः, एवममी संवृत्ता द्वात्रिंशत् एतद्घनवृत्तं ( एवमुपर्यधः द्वौ स्थाप्येते )। युग्मप्रदेश ओजत्र्यस्रं प्रतरं युग्मत्र्यस्रं प्रतरमेतद् घनत्र्यस्रं युग्म अस्य एवोपरि परमाणुर्दीयते यः कोणावस्थितः, यदा जघन्यत्र्यस्रमोजो भवति । अस्य पञ्चदशप्रतरस्योपरि दशप्रदेशिकं दीयते, तस्यैवोपरि षट्प्रदेशिकं घनत्र्यस्रं भवति । ओज चतुरस्रं युग्मचतुरस्रं नवप्रदेशिकस्य चतुरस्रस्योपरि अधश्च नवनवप्रदेशिको दीयते एवं सप्तविंशतिप्रदेशिकं घनचतुरस्रं । ( एवमुपर्यधः द्वौ स्थाप्येते ) चतुःप्रदेशिकस्योपरि चतुःप्रदेशिको दीयते, एवमष्टप्रदेशिकं घनयुग्मचतुरस्रं, श्रेण्यायतमोजः युग्मं प्रतरायतमोजः युग्मचतुरायतम् । पञ्चदशकस्य यदा उपर्यधश्च प्रतरो दीयते तदा पञ्चचत्वारिंशत्प्रदेशिकं घनमोजायतनम्, ( एवमुपरि अधः द्वौ ) षट्प्रदेशिकस्य च यतो दीयते उपरि षट् प्रदेशिकः प्रतरस्तदा द्वादशप्रदेशिकं घनायतं युग्मम्, स्थापना ।

'घनपरिमंडले णं भंते !' वीसपएसिए वीसइपएसोगाढे, प्रतरे प्रतरपरिमण्डलमेतत् एतस्यैव यदोपरि दीयते

प्रतरमन्यदेवं प्रकारमेव तदा च चत्वारिंशत्प्रदेशिकं घनपरिमण्डलं भवति ।

'परिमंडले णं भंते ! दव्वट्ठयाए किं कडजुम्मे तेओए दावरजुम्मे कलियोए ?' परिमण्डलं द्रव्यार्थतया एकमेव द्रव्यम्, नहि परिमण्डलस्यैकस्य चतुष्कापहारोऽस्तीति एकमेवेति कलियुग्मः, यदा पृथक्त्वप्रश्नः तदा कदाचिदेवावंति भवन्ति येषां चतुष्कापहारेण निच्छेदना भवति, कदाचित् त्रीणि पुनरधिकानि भवन्ति, कदाचिद् द्वौ कदाचिदेकमधिकं एप ओघादेशः, विधानादेशो यदा स मुदितानामपि एकैकमादिश्यते तदा कलिरेवेति ।

इदानीं प्रदेशार्थतया यानि द्रव्याण्यवगाढानि विंशतिषु प्रदेशिकेषु तानि किं चतुष्कापहारेण ? चतुरस्राणि अग्राणि त्र्यग्राणि उत द्व्यग्राणि, यस्मादेकस्मिन्नपि प्रदेशे अनन्तानामपि अवगाहो विद्यते तस्मात्स्याच्चतुरग्राणि त्रिद्व्यग्राणि एकाग्राणि वा परिमण्डलानां प्रदेशार्थतया अस्ति केचिच्चतुरग्राः केचित्पुनस्त्र्यग्राः केचिद्द्व्यग्राः केचिदेकाग्रा विधानादेशोऽयं, यदुक्तम्—

पृथक् पृथक् अथ समुदितानामेव प्रदेशाग्रयं चिन्त्यते तदा कदाचिच्चतुरग्राणि कदाचित् त्रिद्व्येकाग्राणि एवं सर्वे । परिमण्डले किं कडजुम्मपदेसोगाढे प्रश्नः-चतुरग्रेषु प्रदेशेष्ववगाढं यस्माद्विंशतीनां चतुष्केणापहारेण

निरग्रता न शेषेषु वृत्तम्, यद् द्वादशप्रदेशिकं यदा घनवृत्तं, एवं ते योगप्रदेशोगाढम्, यत् पञ्चप्रदेशिकं तत् कलौ अवगाढम् ।

नोदावरे तं से पुच्छा, चतुःप्रदेशिकं कडजुम्मेसु अवगाढं त्रिप्रदेशिकं तेओएसु षट्प्रदेशिकं दावरेसु पञ्चत्रिंशत्प्रदेशिकमपि तेजोएसु णो कलिओगेसु, चतुरस्रे प्रश्नः नवप्रदेशिकं कलौ सप्तविंशतिप्रदेशिकं तेजोएसु चतुःप्रदेशिकं कडजुम्मेसु अष्टप्रदेशिकं कडजुम्मेसु अष्टप्रदेशिकमपि आयतं द्विप्रदेशं दावापरेसु त्रिप्रदेशं तेओएसु द्वादशप्रदेशिकं कडजुम्मेसु पञ्चचत्वारिंशत् प्रदेशं कलौ। परिमंडलाणं ओघादेसेण वि विहाणादेसेण वि कडजुम्मेसु अवगाढाः न शेषेषु, कथं पुनरनन्ता वृत्ताः ? तेषां चतुष्केणापहारेण निच्छेदता भवतीति । यदि निच्छेदता न भवेत् तदा स्याद्व्यपदेशः व्यपदेशाऽभावात् कडजुम्मेसु सव्वेसु अवगाढाः सर्वेषां समुदिताः प्रदेशा गृह्यन्ते विधानादेशेन सर्व एव ये सन्निवृत्तास्तेषां केचित् कडजुम्मेसु केचित् तेओएसु। नो दावरेसु, कलिओगपदेसोगाढा वि पूर्वावगाहेन वृत्तानां विभावनीयमेवं नेयम्, परिमंडलेणं किं ? कडजुम्मे य द्वितीये यदुक्तम्—परिमण्डलेन संस्थानेन विपरिणताः स्कन्धाः कियन्तं कालं तिष्ठन्ति ? किं चतुष्कापहारेण चतुरग्राः त्रिद्विएकाग्राः वा ? सर्वे सम्भवाः । 'सेढीओ णं भंते ? किं संखे० असंखे० अणंता० ? णो सं० णो असं० अणंता' कथम् लोकस्य चालोकस्य समुदित एवायं प्रश्नः तस्मादनन्ताः श्रेण्यः सर्व एव सामान्याः, लोकाकाशे प्रश्नः तदाऽसंख्येयाः

असंख्येयत्वाल्लोकस्य नाऽनन्तता, लोकस्य प्रदेशैः समस्तैः न च संख्येयाः न चाऽनन्ताः । अलोकाकाशस्यानन्तत्वात् श्रेणीनामपि अनन्तत्वम्, सेढीओ प्रदेशार्थतया अनन्ता एव, अविशेषित्वाल्लोकालोकयोस्तेन समुदिता एव गृहीताः ।

'सेढीओ णं भंते ! किं अणादीआओ ? प्रश्नः—अविशेषित्वाच्छ्रेणयः या लोके चालोके च तासां सर्वासां ग्रहणं सर्वग्रहणाच्चाऽनाद्याः अपर्यवसिताः, शेषाणां प्रतिषेधः । लोकाकाशश्रेण्यः सर्व एव साद्याः सपर्यवसिताः, अलोकाकाशश्रेणीनां चतुर्णामपि संभवः । 'सेढीओ णं द्रव्यार्थतया किं कडजुम्मं ? प्रश्नः,—यदुक्तम्—किमेताः श्रेण्यः अपगमतया चतुष्केणापहारेण चतुरग्राः त्रिद्विएकाग्राः वा, आह–कडजुम्मा, अनन्तत्वात् श्रेणीनां न निच्छेदता संभवति अनिच्छेदतायां चान्यो व्यपदेश एव नास्ति, सर्वसामान्येन यदा गृह्यन्ते लोके चालोके च तदा अनादित्वादपर्यवसितत्वाऽनन्ततायां च कडजुम्मं अतः पूर्वभावनया । लोकाकाशे पुनर्याः श्रेणयः ततो सिय कडजुम्मा, णो ते उताओ सिय दावरजुम्माओ, णो कलिओगाओ एतद्भूमौ प्रस्तीर्य दृश्यते इतरथा द्रष्टुं न शक्यते ।

कइणं सेढीओ उज्जुयायता एगता वंका दुहओ चक्कवाला अद्धचक्कवाला एगतो खहा दुहओ खहा । सम्प्रत्यमेव संस्थानादिकोऽर्थो गाथाभिलिख्यते :—

परिमंडले य वट्टे, तंसे चउरंस आयए चेव । घणपयरपढमवज्जं, ओयपएसेय जुम्मे य ॥१॥
१ २ ३ ४ ५

पंच य बारसयं खलु, सत्तय बत्तीसयं च वट्टंमी । तिय छक्कय पणतीसा, चउरो य हवइ तंसंमि ॥२॥
नव चेव तहा चउरो, सत्तावीसा य अट्ठ चउरंसे । तिगदुगपण्णरसे चेव, छच्चेव य आयए होंति ॥३॥
पणयालीसा बारस, छब्भेया आययंमि संठाणे । परिमंडलम्मि वीसा; चत्ता य भवे पएसग्गं ॥४॥
सव्वे वि आययम्मि, गेण्हसु परिमंडलम्मि कडजुम्मं । वज्जेज्ज कलिं तंसे, दावरजुम्मं च सेसेसु ॥५॥
वट्टं तंस चउरस, आयतपरिमंडल संठाणाणं । घण-पयरावित्तिओ य जुम्मपएस जहण्ण ठवणा ॥६॥

स्थापनाः—

| | घन | प्रतर | ओज | युग्म |
|---|---|---|---|---|
| वृत्त | ५ | १२ | | ३२ |
| त्र्यस्र | ३ | ६ | ३५ | ४ |
| चतुरस्र | ९ | ४ | २७ | ८ |
| आयत | ३ | २ | १५ | ६ |

| आयते | परिमण्डले |
|---|---|
| ४५ | २० |
| १२ | ४ |
| ६ | |

१.

| ओ | मघु | प्र | घ | प | घ | ज | घ | घ ज | प्र | जु | प्र | ज | व्वण | ज | ज-व | छयन |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| | | ३ | ७ | उ | जं | ७ | ३ | ७ | उ | ७ | उ | ७ | ३ | ७ | | २ |
| ७ | ३२ | ५ | १२ | ३५ | ४ | ६ | २७ | ८ | ९ | २ | १५ | ६ | ४ | २ | ४० | २० |

परिमंडलं जहण्णं, भणियं कडजुम्मवट्टियं लोए । तिरियायय सेढीणं, संखेज्ज पएसिआ किह णु ? ॥७॥
दो दो दिसासु एक्केक्कओय, विदिसासु एस कडजुम्मे । पढमपरिमंडलाओ, वुड्ढी किर जाव लोगंतो ॥८॥

परिहारस्तु—

अट्ठसया पसज्जइ, एवं लोगस्स न परिमंडलया । वट्टालेहेण तओ, वुड्ढी कडजुम्मिआ तत्तो ॥९॥

स्थापनाः—

ई पू अ
उ द
वा प नै

यावल्लोकान्तः
पू
उ द
प

अति लोगतिरियसेढी, संखेज्जपएसिया विरुज्झति । किमलोगतिरियसेढी, संखपएसा ? ण सिद्धातो ॥१०॥
दवट्ठा जइ सव्वा, कडजुम्मातो कहं पएसतया । अलोगतिरियसेढीओ भणिया कडदावरपएसि ॥११॥

हेट्ठा मज्झे उवरिं, वेत्तासणय झल्लरी मुइंगाओ । मज्झिमवित्थारेण य, कोदासगुणमायतो लोगो ॥१२॥
सयंभुपुरिमंतातो, अवरंतो रज्जुमाहित्ता । एएण रज्जुमाणेण, लोगो चोद्दसरज्जुओ ॥१३॥
उध्धारसागराणं, अढ्ढाइज्जाणं जत्तिया समया । दुगुणो दुगुणपवित्थर,—दीवोदहिरज्जु एवइया ॥१४॥
हेट्ठा विक्खंभाओ, उस्सेहो होइ सव्वलोगस्स । दुगुणो विसेसमहिओ, भागाऽसंखेज्जभागेणं ॥१५॥
लोगस्स मज्झिमुद्देसा, अहोलोगो सत्तरज्जुओ । उद्धलोगो विसत्ते, वच्चंतो पंका य पंच तु ॥१६॥
उवासंतरभागं, रयणप्पभाए असंखतिमयं तु । ओगाहेत्ता मज्झे, लोगुस्सेहस्स बोधव्वो ॥१७॥
उड्ढलोगस्स मज्झंमि, बंभलोगो वियाहिओ । पंकाए अंतरद्धविए, अहोलोगस्स मज्झिमं ॥१८॥
रयणसक्कराए य, अंतरा रज्जुमाहितो । सेसाणवि पुढवीणं, अंतरा एवमाहितो ॥१९॥
सोहंमंमि दुविधा, अड्ढाइज्जाय रज्जुमाहिंदे । पंचेव सहस्सारे, छऽच्चुए सत्तलोगंते ॥२०॥
अंगुलसहस्सभागं, उड्ढं लोगंमि विग्गहा । सीयाए जोयणे यावि, अहेलोगम्मि विग्गहा ॥२१॥
जतिवितिरियाय ताओ णियमा कडपायरोपदेसतया । उड्ढायता कहं ? तो कडजुम्मा हुंति दव्वतया ॥२२॥
उड्ढाययाण जा खलु, पदेस दव्वट्ठया विनिद्दिट्ठा । भोयव्वं तिरियाणं, ताए दव्वपदेसतया ॥२३॥
पच्चक्खं दाइज्जइ, सेढीणं पयरलोगनालीए । दव्वपदेसट्ठतया, जंमि विभागो जहा आसिं ॥२४॥

चुलसीतीविक्खंभं, काउं सयमट्ठसट्ठमुस्सेहिं । सेढीणं तो पच्छा, बारससेढिं कुणसु रज्जुं ॥२५॥
बारससेढीरज्जु, रुंदत्तं सत्तवोक्कुसुवत्तं । पुढविओ कप्पाविय, रेहामेत्त करेयव्वा ॥२६॥
उवरिं कुणसु रयणाभ, चउत्थ सेढीए लोगमज्झाओ । तत्तो य चउत्थीए, वोच्छेतो तिरियलोगस्स ॥२७॥
मज्झमभे लोगस्स य धूमाभोवरि चउत्थसेढीयं । अट्ठतीसतिमाओ, तिरियतातो कुणसु वंतति ॥२८॥
मज्झा तिवाया चउरो, सेस दुगा छत्तु जावयकामा । हेट्ठा एगपएसा, तो वातचउक्क अट्ठेगो ॥२९॥
पंच दुगा एगं दुगं, दुतिए तियदु एक्कगा सत्त । दु दुगं चत्तारि दु एक्कगा या दुदुगं चउक्को ये ॥३०॥
दुयतो चत्तारि दु एक्कगाय, दु दुगं दु त्रक्किगा अट्ठ । तिण्णेक्का दोण्णि दुगा, एक्को तत्तो दुगा पंच ॥३१॥
पढमाए अवेलाउ, वितियाए जाव बंभलोगो ऊ । ततियाए गाहाए, बंभोवरिएण संवट्टो ।३२॥
तिरियायतातो कडवायरातो, लोगस्स संखसंखा वा । सेढीओ कडजुम्मा, उड्ढमहे आययमसंखखा ॥३३॥
'सादी सपज्जवसिया, कलिवज्जाओ य लोगसेढीओ । सेसाओ तिविहाओ, पडुच्च लोगं चउद्धा वि ॥३४॥
इदानीमल्पबहुत्वचिन्ता व्याख्यायते गाथामिरेव—
जीवाण पोग्गलाणं, अद्धासमयाण सव्वदव्वाणं । सव्वप्पएसपज्जव-रासीण य वोच्छमप्पबहुं च ॥१॥
थोवा दुवे अणंता, विसेसाहिया ततो दु अणंता । छण्हवि कमोवइट्ठाण, दिट्ठमप्पाबहुसमये ॥२॥

जं पोग्गलावबद्धा, जीवा पाएण होंति तो थोवा । जीवेहिं विरहिया, अविरहिया व पुण पोग्गला संति ॥३॥
एवं सिद्धा थोवा, सइ होंति जीवपोग्गलेहिंतो । जह पुण जीवेहिंतो, अणंतगुणा पोग्गला सुणसु ॥४॥
जं जेण परिग्गहियं, तेयाइजिएण देहमेक्केक्कं । तत्तो तमणंतगुणं, पोग्गलपरिणामओ होइ ॥५॥
तेयाओ पुण कम्मगमणंतगुणियं जओ विणिद्दिट्ठं । एवं ता अवबद्धाइं, तेयगकम्माइं जीवेहिं ॥६॥
इत्तोऽनंतगुणाइं, तेसिं चिय जाणि होंति मुक्काइं । इह पुण थोवत्ताओ, अग्गहणं सेसदेहाणं ॥७॥
जं तेसिं मुक्काइंपि, होंति सट्ठाणऽणंतभागंमि । तेण तदग्गहणमिहं, बद्धाऽबद्धाण दोण्हंपि ॥८॥
इह पुण तेयसरीरग,-बद्धच्चिय पोग्गला अणंतगुणा । जीवेहिंतो किं पुण, सहिता अवसेसरासीहिं ॥९॥
थोवा भणिया सुत्ते, पन्नरसविहप्पओगपाओग्ग । तत्तो मीसपरिणया, णंतगुणा पोग्गला भणिया ॥१०॥
तो वीससापरिणया, तत्तो भणिया अणंतसंगुणिआ । एव तिविहपरिणया, सव्वेवि य पोग्गला लोए ॥११॥
जं जीवा सव्वेविय, एक्कंमि पओगपरिणयाणंपि । वट्टंति पोग्गलाणं, अणंतभागंमि तणुयम्मि ॥१२॥
बहुएहिं अणंताणंतएहिं, तेण गुणिआ जिएहिंतो । सिद्धा हवंति सव्वेवि, पोग्गला सव्वलोगम्मि ॥१३॥
एतो अणंतगुणिआ, अद्धासमया हवंति किं कज्जं ? । ननु थोवा ते नरखित्त-मेत्तवत्तिणा होंति ॥१४॥
भण्णइ समयखेत्तंमि, संति जे केइ दव्वपज्जाया । वट्टइ संपयसमओ, तेसिं पत्तेयमेक्केक्का ॥१५॥

एवं संवयसमओ जं समयं खेत्तपज्जवब्भत्थो । तेणाणंता समया, भवंति एक्केक्कसमयंमि ॥१६॥
जं सव्वलोगदव्व,-प्पएसपज्जवगणस्स मइयस्स । लब्भइ समयक्खेत्त,-प्पएसपज्जायपिंडेणं ॥१७॥
एवइ समएहिं गएहिं, लोगपज्जवसमा समयसंखा । लब्भइ अन्नेहिं वि य, तत्तियमेत्तेहिं तावइया ॥१८॥
एवमसंखेज्जेहिं, समयेहिं गएहिं तो गया होंति । समयाओ लोगदव्व,-प्पएसपज्जायमेत्ताओ ॥१९॥
इय सव्वलोगपज्जव,-रासीओ वि समया अणंतगुणा । पावंति गणिज्जंता, किं पुण ता पोग्गलेहिंतो ।२०॥
एतो समयेहिंतो, होंति विसेसाहियाइं दव्वाइं । जं भेया सव्वे च्चिय, समया दव्वाइं पत्तेयं ॥२१॥
सेसाइं जीवपोग्गल,-धम्माऽधम्मंबराइं छूढाइं । दव्वट्ठाए समएसु, तेण दव्वा विसेसहिया ॥२२॥
आहद्धासमयाणं, किं पुण दव्वट्ठए व नियमेणं । तेसिं पएसट्ठाविहु, जुज्जइ खंधं समासज्ज ॥२३॥
सिद्धं खंधो दव्वं, तदवयवा वि य जहा पएसत्ति । इय तव्वत्ती समया, होंति पएसा य दव्वं च ॥२४॥
भण्णइ परमाणूण, अन्नोन्नमवेक्ख खंधया सिद्धा । अद्धासमयाणं पुण, अन्नोन्नावेक्खया नत्थि ॥२५॥
अद्धासमया जम्हा, पत्तेयत्तेय खंधभावे य । पत्तेयवत्तिणो च्चिय, ते तेणऽन्नोन्ननिरवेक्खा ॥२६॥
एत्तो सव्वपएसा, णंतगुणा खप्पएसणंतत्ता । सव्वागासमणंतं, जेण जिणिंदेहिं पण्णत्तं ॥२७॥

आह समेणंतत्तंमि, खेत्तकालाण किं पुण निमित्तं । भणियं खमणंतगुणं, कालो य सिमणंतभागंमि ? ॥२८॥
भण्णइ नभसेढीए, अणाइयाए अपज्जवसियाए । निप्फज्जइ खंमि घणो, न उ कालो तेण सो थोवो ॥२९॥
एत्तो य अणंतगुणा, पज्जाया जेह नहपएसम्मि । एक्केक्कंमि अणंता, अगुरुलहू पज्जवा भणिया ॥३०॥
लक्खणमणासरंता, जं दव्वए देसोभयट्ठाणं ।

॥ इति पञ्चविंशतितमशतके तृतीयोद्देशः समाप्तः ॥

卐

## अथ पञ्चविंशतितमशतके चतुर्थोद्देशः—

जीवपुद्गलकालानामनन्तत्वात् कडजुम्मत्तं । 'धम्मत्थिकाए णं किं ओगाढे' ? इत्यादि—

असंख्येयेषु प्रदेशेष्ववगाढः लोकप्रमाणत्वात्तस्य लोकस्य चाऽसंख्येयत्वे कडजुम्मे पदेसु न सेसेसु । एवं सर्वाऽस्तिकायाः यस्मात् सर्वेषां लोकेऽवगाहः । द्रव्यार्थतया जीव एक एव तस्मात् कलिः न शेषाः । जीवाः पुनः ओघादेशेन कडजुम्मा अनन्तत्वाज्जीवानाम्, विधानादेशाद् पृथग्देशादिति यस्मात् कलिः । नारकाः ओघादेशात् सर्व एव परिगण्यमानाश्चतुष्केणापहारेण कडजुम्मा कस्यांचिदवस्थायां तेजोयोगाः कस्यांचिद् द्वापराः कस्यांचित्कलिः, विधानादेशात् पृथग्ग्रहणं एकग्रहणं सिते यावत् तस्मात्कलिः । प्रदेशार्थतया जीवाः कडजुम्मे

असंख्येयत्वात् प्रदेशानां पूर्वभावनया । शरीरप्रदेशान् प्रतीत्य येष्ववगाढमौदारिकं ते प्रदेशाः, विधानादेशतो जीवास्तु प्रदेशार्थतया कडजुम्मा यस्मादनन्ता जीवाः सर्वे चासंख्येयप्रदेशिकाः एवमनन्तान्यसंख्येयानि एतेषां चतुष्केणाऽपहारेण निच्छेदता च नास्तोति कडजुम्मा, शरीरप्रदेशान् पुनः प्रतीत्य प्रष्टव्यम्—'जीवः किं कडजुम्मे प्रदेशेष्ववगाढः ?' प्रश्नः—सर्वे स्यात् शरीरनियमात् । जीवः पुनः कृतयुग्मेषु जीवानां लोकेऽवगाहः लोकश्च कडजुम्मे । नारकाः ओघादेशतः सर्वनारकाणामवगाहमेकीकृत्य चतुष्केणाऽपहारेण कदाचित्कडजुम्मावगाहः कदाचिदन्याः, विधानादेशतः यदुक्तम्—एकंकः कश्चित् कडयुग्मेषु कश्चित् तेजोयोगेषु कश्चित् द्वापरेषु कश्चित् कलिषु स्थितिषु, कडयुग्मा सामान्याऽविशेषेण या जीवभावे व्यवस्थितिः । नारकादीनां कदाचित्कश्चिवयुग्मसमयस्थितिकः परिमितत्वात् कालस्याऽपहारोऽस्ति अग्रसम्भवश्च । सिद्धभावेन कडयुग्मसमयस्थितिकः अपर्यवसितत्वात् सिद्धस्य ।

जीवा ओघादेशतो विधानादेशतो वा कडयुग्मसमयस्थितिकाः, जीवभावो हि सर्वजीवानामपर्यवसितस्तस्मात् कडयुग्मस्थितिः, नारकाः ओघादेशतः कडयुग्मसमयस्थितिकाः भवेत् कदाचित्, ये प्रश्नसमये नारकास्तेषां सर्वेषां स्थितिः एकत्र संपीड्य चतुष्केणाऽपहारेण कदाचित्कडयुग्मा कदाचिदन्या हि अवस्थिताः, विधानादेशतः पुनर्यदुक्तं पृथक् पृथक् कथम् ? नारकाः केचित् कडयुग्मस्थितिकाः केचिदन्यसमयस्थितिकाः ।

जीवाः कृष्णवर्णपर्यायैः जीवप्रदेशान् प्रतीत्य ओघादेशतः सर्वजीवानां कृष्णपर्याया एते एकत्र संपिण्डय कदाचित्ते चतुरग्रा भवेद् कदाचिद् द्वित्रिएकाग्रा वा, विधानादेशतः कश्चित् कडयुग्मः कृष्णवर्णपर्यायो भवति कदाचिदन्यः, संख्यैकत्रप्रश्ने यथा विधानादेशोऽभिहितः पृथक्त्वे तथैव एवं गन्धरसस्पर्शा नेयाः ।

'सेया निरेया' इति सचला निश्चला इति यावत्, अविग्गहगतिसमावण्णगा देशे या इलिका दृष्टान्तात् विग्रहस्था तिन्दुकदृष्टान्तात् । परमाणुपोग्गला ओघादेशतः सर्वानेकत्र परमाणून् कृत्वा चतुष्केणापहारेण चतुरग्राविर्भवेत्. विधानादेशतो यदुक्तम्—एकैकादेशतः एकत्वा-कलिः द्विप्रदेशिका स्यात् कडयुग्मा स्यात् द्वापरः, न शेषाः कथम् ? द्विप्रदेशिको द्विगुणकडयुग्मः त्रिगुणो द्वापरः समेन गुणकारेण कडयुग्मः संभवति, विषमेण बादरः एवं यावान् भवेत् तावान् च तु अयं संभवः, विधानादेशतोऽप्येतदेव त्रिप्रदेशिका', यावन्तः संघातं गच्छन्ति तावन्तश्चतुर्णामपि संभवः, यद्यप्यनन्तानां संघातो यथा त्रिप्रदेशिका द्वये बादराः त्रिषु कलिः चतुर्षु कडयुग्मः पंचसु तेजोगो एवं कृत्वा सर्वसंभवः, एकंकादेशेन तेजोगाः चतुःप्रदेशिका अनन्ता अपि संहताः कडयुग्माः एवं नेयम् ।

''परमाणुपोग्गले णं भंते ? किं कडजुम्मेसु ओगाढे ? एकत्वात्कलौ द्विप्रदेशिकः प्रदेशद्वये एकस्मिन्

वा, एवं नेयः परमाणुः । किं सचलो निश्चलः ? इति प्रश्नः कालतः कियच्चिरं ? परमाणवः सचलाः सर्वाद्धं, नहि परमाणूनां समयमात्रमपि निश्चलता संभवति । चलन्त्यनिश्चलाश्च भवन्त्यन्ये परमाणवः संस्थानान्तरकालतः किं चलनेन 'जहण्णेणं एकं समयं' अयं परमाणुरेष जघन्यतः समयमात्रं स्थित्वा चलति, उत्कृष्टेन असंख्येयकालं स्थित्वा पुनर्भविष्यति परस्थानान्तरं भ्रमन् द्विप्रदेशिकं स्कन्धमनुप्रविश्य जघन्यतस्तेन सहैकं समयं स्थित्वा पुनर्भ्रंश्यति, उक्कोस० असंख्येयकालं स्थित्वा द्विप्रदेशादिना पुनर्भ्राम्यति ! निश्चलो भवन् जघन्यतः समयमेकं परिभ्रम्य पुनर्निश्चलस्तिष्ठत्येव, उक्को० आवलिकाया असंख्येयभागं भ्रमित्वा पुनस्तिष्ठति । परस्थानान्तरं निश्चलः सन् तस्मात्स्थानात् विचलितः । द्विप्रदेशौ द्वौ स्कन्धौ एकं समयं स्थित्वा पुनर्निश्चल एव, पृथक्तिष्ठति असंख्येयं वा कालं स्थित्वा तेन सह पृथग् भूत्वा पुनस्तिष्ठति एवं द्विप्रदेशादीनां नेयम् । ॥ इति पञ्चविंशतितमशतके—चतुर्थोद्देशः ॥

卐

## अथ पञ्चविंशतितमे शतके पञ्चमोद्देशः—

'अणागयद्धा णं तितद्धाओ समयाहिया' इत्यादि—अनागतकालातीतकालसमयोर्मध्ये प्रश्नः— कालः

समयो वर्तते स चाऽतीतेन प्रविशति अनागते क्षेप्य तस्मात्समयातिरिक्ता अनागतद्धा, अतीताद्धा च समयोना । अनागताद्धा प्रतीतेन च समयेन सर्वाद्धाऽतीताऽनागता च एकीकृता अतीता द्वयापरिच्छिद्यमानाः कियन्त्यो भवन्ति ? सर्वाद्धा अतीताद्धा प्रति द्विगुणा सातिरेका तेनैव समयेन इति ।

## इति पञ्चविंशतितमे शतके पञ्चमोद्देशः—

卐

## अथ पञ्चविंशतितमशतके षष्ठोद्देशः —

पुलाक इति शाश्वद्भावं प्रतीत्य अस्तित्वभावमिति यावत् । दुष्षमसुषमायां जन्मतो जात एव दुष्षमाप्रतिपन्ना एव सन्ति भावाः, न दुष्षमायां जन्म भवति । पुलाको—निस्सारः, ज्ञानपुलाकः ज्ञानजीवेन ज्ञानं निस्सारं कुरुते, सम्यक्त्वमुपजीवन् दर्शनपुलाकः, चारित्रमुपजीवन् क्षपकोऽहमिति ब्रवीति दानार्थः स एवं लब्धिमुपजीवन् चारित्रं निस्सारं करोति, लिङ्गमुपजीवन् लिङ्गपुलाकः, अथवा ज्ञानपुलाकस्येदृग्लब्धिः चक्रवर्तिनमपि जेतुं सघकार्ये समर्थः । 'नियंठसिणाएहिंतो पुलागस्स संजमट्ठाणा असंखेज्जगुणा दृश्यन्ते एव षट्' कथम् ? एकं स्थान णियंठपुलाककषायकुशीलमध्ये सिणायाणं एकमेव, एते च षट् असंख्येयभूता पश्यति दृश्यते दर्शनमात्रमेतत् । पुलाकं बकुशस्य प्रतिसेवनाकुशीलस्य चाऽसंख्येयगुणाः यस्माद् बकुशस्योपरि बकुशादि-

संयमस्थानानि अतिक्रान्तानि, प्रतिसेवनाकुशील एकादशः, सकषायकुशीलः पुनस्तयोरुपरि एकमधिकं गतः, एषा संख्या निदर्शनमात्रं कृता, यदुक्तमेवं व्यवस्थिता:-पुलाकः पुलाकश्च पुलाकस्थाने स्थितः किंहीनस्तुल्योऽतिरिक्त इति ? यदि प्रथमस्य कण्डकस्थौ द्वावपि ततस्तुल्यः अथैकः प्रथमे कण्डके द्वितीयः षष्ठे ततः प्रथमकाण्डकस्थः षष्ठस्य हीनः षष्ठस्थः प्रथमस्थस्यातिरिक्तः । पुलाको बकुशस्य किंहीनस्तुल्योऽतिरिक्तः इति प्रश्नः—बकुशं प्रति पुलाको हीनः यस्मात्पुलाकस्योपरि एकादशसु कण्डकेषु व्यवस्थितः प्रतिसेविनः । स्थापना—

कण्डकानां स्थापना—

कषायकुशीलस्य षट्स्थानपतितः कथम् ? कषायकुशीलश्च प्रथमे कण्डके पुलाकश्च प्रथमे कण्डके द्वौ तुल्यौ, यदा पुलाकः प्रथमे कषायकुशीलश्च प्रान्ते वर्त्तते तदाऽनन्तहीनः । अथ कषायकुशीलः प्रथमे समये पुलाकः षष्ठे तदाऽधिकः संख्येयाऽसंख्येयाऽनन्तभागैरधिकः गुणैर्वा णियणियणुभ्यणाताण अनन्तहीनः । बकुशः पुलाकस्य परस्थानं प्रति न हीनः न तुल्यः किं तर्हि ? अतिरिक्तः, यस्मादुपरि वर्त्तते पुलाकस्य संयमस्थानमङ्गीकृत्य । अकुशप्रतिषेवकयोः इदानीं यदा उभावपि प्रथमे तदा तुल्यौ, यदा पुनर्बकुशः प्रथमे प्रतिसेवनाकुशील एकादशे तदा हीनः, यदा पुनर्बकुशः दशमे प्रतिसेवनाकुशीलः प्रथमे तदाऽतिरिक्तः ।

इदानीं कषायकुशीलस्य बकुशस्य च—यदा बकुशः प्रथमे कषायकुशीलश्च प्रथमे तदा बकुशोऽतिरिक्तः, यदा पुनः कषायकुशीलोऽष्टमे बकुशश्च प्रथमे, तदा तुल्यौ, यदा पुनः बकुशः प्रथमे कषायकुशीलो तदा हीनः, यदा कषायकुशीलोऽष्टमे बकुशो दशमे तदातिरिक्तः। 'णियंठसिणायाणं अणंतगुणहीनः यथा बकुशस्तथा प्रतिषेवककुशीलः, कषायकुशीलो यदा प्रथमे स्थाने पुलाकश्च प्रथमे तदा तुल्यः, यदा कषायकुशीलः प्रथमे पुलाकश्च षष्ठे तदा हीनः, यदा पुनः पुलाकः प्रथमे कषायकुशीलोऽन्ते तदाऽतिरिक्तः।

बकुशेन सह—यदा बकुशः प्रथमे कषायकुशील प्रथमे तदाहीनः यदा बकुशः प्रथम एव कषायकुशीलोऽष्टमे तदा तुल्यः, यदा बकुशः प्रथमे कषायकुशीलोऽन्ते तदाऽतिरिक्तः, एवं प्रतिषेवनाकुशीलेनाऽपि सह नियंठो। चतुर्णामधःस्थानानामतिरिक्तः, स्वस्थाने नियंठेण अण्णेण सह तुल्लो, एवं सिणातओवि। पुलाककषायकुशीलयोः जनन्यास्तुल्याश्चरित्रपर्याया: पुलाकस्योत्कृष्टा ये तेऽनान्तगुणाः यस्मात् कषायकुशीलादसौ इषद्व्यतिक्रान्तः, बकुशप्रतिषेवनाकुशीलयोर्जघन्यास्तुल्याः अनन्तगुणाः, पुनः बकुशस्योत्कृष्टयोः कषायकुशीलस्याऽजघन्योत्कृष्टयोः बकुशस्योत्कृष्टाः अनन्तगुणाः, पुलाकोत्कृष्टानां प्रतिषेवनाकुशीलस्य पुलाकस्य बकुशस्य च उत्कृष्टयोरनन्तगुणाः पुलाकबकुशप्रतिषेवनाकुशीलानां ये उत्कृष्टास्तेषां कषायकुशीलस्योत्कृष्टा अनन्तगुणाः। निर्ग्रन्थस्नातकयोस्तुल्या अनन्तगुणाः। पुनः शेषाणां 'णोसन्नोवउत्ते होज्जा'—यदुक्तम्—ज्ञानोपयुक्तपुलाकः कति भवग्रहणानि भवेत्?

जघन्यत एकमेव भवं कश्चिल्लभेत पुलाकत्वं लब्ध्वा तस्मिन्नेव सिध्यति यस्मात् उत्कृष्टेन भवत्रयं लभते ततः सिद्धिः एकान्तरं द्वयन्तरं बह्वन्तरं वा, यथा तथा त्रयः वारा लब्धं भवति तदाऽवश्यं सिध्धिरेवं नेयम् ।

पुलाकस्यैकभवे कियन्त आकर्षाः ? जघ० एक एव, उत्को० त्रीणि एकस्मिन्नेव भवे पुलाकत्वानि प्राप्नुयात् । बकुशः उत्कृष्टेन शतशः प्रतिषेवनाकषायकुशीलावपि एवम्, निर्ग्रन्थता उ० द्वौ, स्नातकत्वमेकमेव। नानाभवेषु पुलाकस्य कियन्तः ? जघन्येन द्वौ उत्कृष्टेन सप्त, एकस्मिन् त्रीणि त्रीणि अन्यस्मिन् अन्यस्मिन्नेकमेव, एवं भवत्रयेण सप्त आकर्षा उत्कृष्टेन । निर्ग्रन्थस्य जघ० द्वौ उत्कृ० पञ्च एकस्मिन् भवे द्वौ आकर्षौ निर्ग्रन्थतां प्रतिपन्नः प्रतिपतितः पुनर्निग्रन्थतां प्रतिपद्येत उत्कर्षेणैकस्मिन् भवे द्वावाकर्षौ । अनेन प्रकारेणान्यस्मिन्नपि भवे द्वौ तृतीये चैकमेवाकर्षं कृत्वा सिध्यति ।

पुलाकः पुलाकीभूय कियता कालेन पुलाकत्वमापद्यते ? उत्तरम्—जघन्यतोऽन्तर्मुहूर्तं स्थित्वा पुनः पुलाक एव भवति, उत्कर्षतोऽनन्तेनकालेन पुनः पुलाकत्वमाप्नोति एवं नेयम् । 'सिणाए लोयस्स किं ?' प्रश्नः–संख्येयभागो भवेद्यदा दण्डकपाटान्तराणि पूरयति, असंख्येयभागे यदा दण्डं करोति, सर्वलोके यदा सर्वलोकः पूर्णो भवति ।

॥ इति पञ्चविंशतितमे शतके षष्ठोद्देशः ॥

## अथ पञ्चविंशतितमे शतके सप्तमोद्देशः—

सामाइयंमि उ कए चाउज्जामं अणुत्तरं धम्मं । तिविहेण फासयंतो, सामाइयसंजओ स खलु ॥१॥
छेत्तूण य परियागं, पोराणं जो ठवेइ अप्पाणं । धम्मंमि पंचजामे, छेदोवट्ठावणो स खलु ॥२॥
परिहरइ जो विसुद्धं, तं पंचयामं अणुत्तरं धम्मं । तिविहेणं फासयंतो, परिहरियसंजओ स खलु ॥३॥
लोभाणु वेययंतो, जो खलु उवसामओ व खवओ वा । सो सुहुमसंपराओ, अहखाया ऊणओ किंचि ॥४॥
उवसंते खीणम्मि य, जो खलु कम्मंमि मोहणिज्जंमि । छउमत्थो विजिणो वा, अहखाओ संजओ स खलु ॥५॥

यथाख्यातसंयतस्य एकमेव संयतस्थानम्, सूक्ष्मसंपरायस्याऽसंख्येयगुणाः यस्मात्तस्य षट् संयमस्थानानि, परिहारसंयतस्याऽसंख्येयगुणाः यस्मादसौ अष्टसु संयमस्थानेषु व्यवस्थितः, सामायिकछेदोपस्थापनयोर्द्वयोरपि तुल्यैर्यस्मादेकोनविंशतिषु व्यवस्थितौ तस्मादसंख्येयगुणे । सामायिको यदा प्रथमे संयमस्थाने छेदोपस्थाप्यश्च प्रथमे तदा तुल्यौ, यदा सामायिकं प्रथमे उपरि छेदोपस्थाप्यः तदा हीनः सामायिकसंयतस्थस्य, यदा सामायिक उपरि वर्त्तते प्रथमे छेदोपस्थाप्यस्तदतिरिक्तः । परिहारविशुद्धिना सहेदानीम्, सामायिको यदा प्रथमे परिहारिकश्च प्रथमे तदा हीनः, यदाऽष्टमे सामायिकः परिहारिकः प्रथमे तदा तुल्यः, यदा परिहारिकः प्रथमे वा पश्चिमे वा सामायिकश्च पश्चिमे तदाऽतिरिक्तः ।

सूक्ष्मसंपरायस्याऽनन्तगुणहीनो यस्मात्संयमस्थानत्रयमन्तराले, यथाख्यातः सूक्ष्मरागस्यापि उपरि यस्मात्तस्मादनन्तगुणहीनः । एवं छेदोपस्थाप्यः परिहारिकः—यदा सामायिकश्च प्रथमे तदाऽतिरिक्तः परिहारिकः, यदाऽष्टमे सामायिकः परिहारकश्च प्रथमे तदा तुल्यः, यदा सामायिश्चरमे परिहारिकश्च प्रथमे चरमे वा तदा हीनः । सूक्ष्मसंपराययथाख्यातयोरनन्तगुणहीनः, सूक्ष्मसंपरायो यदा प्रथमे स्थाने द्वितीयश्च प्रथमे तदा तुल्यौ, अथ यदा एकः प्रथमे द्वितीयस्तृतीये तदा द्वितीयोऽतिरिक्तः प्रथमो हीनः एवं स्वस्थाने नेयः । अल्पबहुत्वं श्रेणीं निरीक्ष्य विभावनीयम् । सूक्ष्मसंपरायस्यैकभविकाः कत्याकर्षाः ? इति प्रश्नः—इदमन्यल्लिख्येत, छेओवट्ठावणिया जहं अड्ढाइज्जाइं कसमयाति उत्सर्पिण्यामादितीर्थंकरस्य अर्धतृतीयानि वर्षशतानि तीर्थमिति कृत्वा ऽन्यल्लिख्यते, 'सुहुमाणं जह० एक्कं समयं उक्को० छम्मासा' सिद्धिगतेः षण्मासान्तरमिति कृत्वा इति ।

॥ इति पञ्चविंशतितमे शतके सप्तमोद्देशः ॥

॥ परिसमाप्तं च पञ्चविंशतितमशतकम् ॥

卐

## ॥ अथ षड्विंशतितमं शतकम् ॥

### अथ षड्विंशतितमशतकस्य प्रथमोद्देशः—

"बंधिसय बीयभंगो, जुज्जइ जइ कण्हपक्खियाईणं । तो सुक्कपक्खियाणं, पढमो भंगो कहं गेज्झो ॥१॥"
भण्णइ–"पुच्छाणंतरकालं, पइ पढमो सुक्कपक्खियाईणं । इअरेसिं अवसिट्ठं, कालं पइ बीअओ भंगो ॥२॥"

एषा लवणगाथा एतदनुसारेण वाच्यम् । 'जीवे णं भंते ! पावं कम्मं किं बंधी ? प्रश्नः—पापं कर्म्म मोहनीयं तदभव्यो बद्धवान् बध्नाति वेदानीं भन्त्स्यति, भव्यो यः कृष्णलेश्याः बद्धवान् बध्नाति वेदानीं भन्त्स्यति च, पुनर्भव्यो बद्धवान् बध्नातीदानीं यदा तदा न भन्त्स्यति, उपशामको बद्धवान् न बध्नाति उपशामकत्वे यः प्रतिपतितः स पुनर्भन्त्स्यति, क्षपको बद्धवान् क्षपकत्वे न बध्नाति क्षपकस्य प्रतिपातो नास्ति तस्मात् न भन्त्स्यति । एवमेव सलेश्याः विभावनीयाः । अभव्यभव्योपशामकक्षपकाः सर्वे सलेश्याः । कृष्ण-लेश्यो योऽभव्यः स बद्धवान् बध्नाति च भन्त्स्यति, भव्यो यः कृष्णलेश्यः स बद्धवान् बध्नाति न भन्त्स्यति यदा तदा एवम्, यावत् पद्मलेश्यः शुक्ललेश्यः । द्रव्यलेश्यां प्रतीत्याऽभव्यो यः स बद्धवान् बध्नाति भन्त्स्यति च, भव्यो यदा तदा न भन्त्स्यति । उपशामकः शुक्ललेश्यः स बद्धवान् पूर्वकाले उपशामकत्वें न बध्नाति, प्रतिपतितश्च द्रव्यलेश्यां प्रति भन्त्स्यति । क्षपकः शुक्ललेश्यो बद्धवान् न बध्नाति न भन्त्स्यति ।

अलेश्यः केवली स बद्धवान् न बध्नाति न च भन्त्स्यति । 'अवड्ढस्स पोग्गलपरियट्टस्स परेण जस्स सिद्धी सो कण्हपक्खीओ स बद्धवान् बध्नाति च, अभव्यः स भन्त्स्यति भव्यो न भन्त्स्यति । परतस्तस्य अवड्ढस्स परियट्टस्स आराद् यस्य सिद्धिः स शुक्लपाक्षिकः बद्धवान् बध्नाति अधुना भन्त्स्यति । परियट्टद्विकस्यान्तः अन्यः परिवर्त्तादान्यात् न भन्त्स्यति यदा तदा उपशामकाः तस्यैवान्तर्बद्धवान् न च बध्नात्युपशमकाले प्रतिपतितश्च भन्त्स्यति, क्षपकः बद्धवान् न बध्नाति न च भन्त्स्यति अप्रतिपतितत्वाद् । सम्यग्दृष्टिः बद्धवान् बध्नाति न भन्त्स्यति च यावदुपशामकत्वं न लभते भन्त्स्यति च । उपशमकत्वप्राप्तौ उपशामकः सम्यग्दृष्टिर्बद्धवान्, न बध्नाति उपशामककाले, प्रतिपतितो भन्त्स्यति च । क्षपकः सम्यग्दृष्टिर्बद्धवान् न बध्नाति न च भन्त्स्यति पतनाऽभावात् । मिथ्यादृष्टिरभव्यः बद्धवान् बध्नाति भन्त्स्यति, यो मिथ्यादृष्टिर्यदा सम्यक्त्वं प्रतिपत्स्यति तदा न भन्त्स्यति, एवं सम्यग्मिथ्यादृष्टेरपि । णाणी जाव मणपज्जवनाणी बद्धवान् बध्नाति भन्त्स्यति वा यदा न क्षपकत्वमुपशमकत्वं चाऽऽप्नोति तदा, यदा प्राप्स्यतीति न भन्त्स्यति । उपशामको मतिज्ञानी यावत् । मनःपर्यायज्ञानी बद्धवान् न बध्नाति भन्त्स्यति प्रतिपतितः, क्षपको न भन्त्स्यति वा तस्य । केवलज्ञानी बद्धवान् न बध्नाति न भन्त्स्यति । अज्ञानी अभव्यः बद्धवान् बध्नाति भन्त्स्यति च, यः पुनर्भव्यः स यदा तदा न भन्त्स्यति, एवं यावत् परिग्रहसंज्ञा नोसंज्ञोपयुक्ते यदुक्तं—ज्ञानोपयुक्ते तस्मिन् चत्वारः यथाऽवधिमनःपर्याय-

ज्ञानोपयुक्ते, सवेदकः—स्त्रीपुंनपुंसकवेदकः-योऽभव्यस्तस्य प्रथमो, भव्यस्य यदा बन्धो न भविष्यति इति द्वितीयः। अवेदकः पुरुषवेद उपशामिते परतो बध्नात्येव यावन्न भवति सूक्ष्मसंपरायः यदा तदा न भन्त्स्यति, उपशामको बद्धवान् न बध्नाति भन्त्स्यति प्रतिपतितः, क्षपकस्य चरमः। सकषायी बद्धवान् बध्नाति भन्त्स्यति चाऽभव्यः, भव्यश्च यावन्नापनोति सूक्ष्मसंपरायत्वं प्रापयति, उपशामको बद्धवान् न बध्नाति उपशमकाले भन्त्स्यति प्रतिपतितः, क्षपको बद्धवान् न बध्नाति सूक्ष्मसंपरायकाले लोभाणुं यावद्वेदयति न च भन्त्स्यति अपतनात्। एवमेव लोभकषायी। क्रोधमानमायासु अभव्यस्य प्रथमः, द्वितीयो भव्यस्य यदा तदा न भन्त्स्यति। अकषायी उपशामको बद्धवान् न बध्नात्युपशमककाले प्रतिपतितो भन्त्स्यति अकषायत्वेन कथं प्रतिपातः[1] ? उच्यते— "जाति उवसंतकसाओ,

" गाहा

तस्मादस्ति प्रतिपात इति पुनर्भन्त्स्यति।

सयोगी-मणयोगि वइजोगी काययोगी—अभव्यानां प्रथमः भव्यानां द्वितीयः, उपशमकस्य सयोगित्वात् तृतीयः, क्षपकस्य चतुर्थः। साकारानाकारयोरभव्यस्य प्रथमः भव्यस्य द्वितीयः, उपशामकस्य तृतीयः क्षपकस्य चतुर्थः।

टी० १ पु० यावदुपशमकत्वं न लभते भन्त्स्यति च उपशामकत्वप्राप्तौ।

अयोगी-केवली स बद्धवान् न च बध्नाति च न भन्त्स्यति । नारको बद्धवान् बध्नाति भन्त्स्यति यावच्चोद्वर्त्तते, भव्यो यदा तदा न भन्त्स्यति एवं मनुष्यवर्जा यावद्वैमानिकाः ।

यस्मान्मनुष्यगतौ उपशमकक्षपकश्रेणिलाभः तस्मात् प्रथमद्वितीयौ भङ्गौ । सकषायी बद्धवान् बध्नाति भन्त्स्यति च यदा तदा ज्ञानावरणीयम्, सकषायी-लोभकषायित्वे बद्धवान् बध्नाति उपशामकः यावदपश्चिमौ द्वौ चरमसमयौ । ज्ञानावरणीयं दर्शनावरणीयं च व्यतीतेषु न भन्त्स्यति । वेदनीयं बद्धवान् बध्नाति भन्त्स्यति च, अभव्यः भव्यश्च यावदयोगित्वं न प्राप्नोति तावत्, भव्यो यदा तदा न भन्त्स्यति इति द्वितीयः । अयोगी बद्धवान् न बध्नाति न च भन्त्स्यति । ( शुक्ललेश्यः ) सिद्धश्च तृतीयो नास्ति कथम् ? यो न बध्नाति वेदनीयं स भन्त्स्यत्यपि नैव । एवं सलेश्यः यस्मात् सलेश्यता क्षपकस्य कृष्णलेश्या यावत् पद्मलेश्या तावत् प्रथमद्वितीयौ बंधो न बध्नाति न भन्त्स्यति कृष्णलेश्यादीनां पद्मलेश्यान्तानां न भवति, यस्मात् शुक्ललेश्यः क्षपकः शुक्ललेश्यस्य तृतीयो नास्ति । अलेश्यः सिद्धः स बद्धवान् न च बध्नाति न च भन्त्स्यति ।

"सुक्कपक्खिए किं वेयणिज्जं" प्रथमद्वितीया विद्यते, एवमयोग्यपि यस्मात् शुक्लपक्षिके एव तस्माच्चतुर्थः । सम्यग्दृष्टिर्वेदनीयं बद्धवान् बध्नाति भन्त्स्यति च यावदयोगित्वं नाऽऽप्नोति, आप्नोति यदा तदा न

भन्त्स्यति इति द्वितीयः, अयोगी न बध्नाति न भन्त्स्यति । सम्यग्दृष्टिर्ज्ञानी न बध्नाति भन्त्स्यति यावदयोगित्वं न भवति, यदा भविष्यति तदा न भन्त्स्यति, अयोगिनः चतुर्थः, एवं केवलज्ञानाऽवेदकाऽकषायी साकाराऽनाकारोपयुक्ते विभावनीयो तेनैव प्रकारेण शेषस्थानेषु प्रथमद्वितीयः । 'जीवे आउयं' इति प्रश्नः—अभव्यस्य प्रथमः, द्वितीयश्च यदा तदा न भन्त्स्यति, आयुरुपशमको बद्धवान् न बध्नाति प्रतिपतितः भन्त्स्यति, ३ क्षपकः बद्धवान् बध्नाति न च भन्त्स्यति इति चतुर्थः ।

एवं सलेश्यो यस्मात् सलेश्यत्वमुपशमकक्षपकयोरपि, शुक्ललेश्यः द्रव्यलेश्यां प्रति चतुर्थः क्षपकस्य । अलेश्यः सयोगी स न बध्नाति न च भन्त्स्यति । कृष्णपाक्षिकः बद्धवान् बध्नाति भन्त्स्यति च, अथवा बद्धवान् न बध्नाति अबन्धकाले पश्चाद् भन्त्स्यति काले इति १-३ । शुक्लपाक्षिकः सम्यग्दृष्टिः बद्धवान् बध्नाति काले भन्त्स्यति च यावत्सूक्ष्मसंपरायत्वं नाप्नोति, अथवा न बध्नाति च पुनः सूक्ष्मसंपरायत्वे उपशमको बद्धवान् न बध्नाति प्रतिपतितो भन्त्स्यति, क्षपको बद्धवान् न बध्नाति न च भन्त्स्यति । सम्यग्दृष्टिर्बद्धवान् बध्नाति भन्त्स्यति च यावत्सयोगित्वं नाऽऽप्नोति, अथवा न भन्त्स्यति यदा तदा सयोगित्वं प्राप्तो, उपशमकसम्यग्दृष्टिर्बद्धवान् न बध्नाति प्रतिपतितः पुनर्भन्त्स्यति, क्षपको न भन्त्स्यति । मिथ्यादृष्टिः बंधी बंधइ बंधिस्सइ सम्यक्त्वात्प्रतिपतिते, उपशमकः सन्नेव बद्धवान् अथवा न बध्नाति एष्यत्काले बंधिस्सइ,

काले चतुर्थः द्रष्टव्यः । सम्यग्मिथ्यादृष्टिः प्रथमद्वितीयभङ्गो नास्ति तस्य सम्यग्मिथ्यात्वे वर्त्तमानस्य बन्ध एव नास्ति यदा पतितः नवाऽपतितस्तदा आयुषो बन्धः, अतो नास्ति अस्य प्रथमद्वितीयः, तृतीयोऽस्ति यस्माद् बद्धवान्, न बध्नाति सम्यग्मिथ्यात्वादप्रतिपतिताद् भन्त्स्यति च प्रतिपतितो नवा भन्त्स्यति सम्यक्त्वप्रतिपन्नः उपशमकश्रेणिलाभात् ।

मनःपर्यायज्ञानी, बध्नाति यदि ततो वैमानिकेष्वसौ बध्नाति यस्मात् पुनर्मनुष्येषु अवश्यं भन्त्स्यति इति द्वितीयो नास्ति भङ्गः, तृतीयः उपशमकः स न बध्नाति प्रतिपतितो भन्त्स्यति, क्षपकः सन् न बध्नाति न च भन्त्स्यति । केवलज्ञानी अलेश्यश्चरमभङ्गिकौ यस्मादनयोरायुषो न च बंधो न च बंधिस्सइ । अवेदकः अकषायी च क्षपकोपशमको वा, तयोर्बन्ध नास्ति आयुषः उपशमकात् पतितो बंधिस्सइ क्षपको न च बंधिस्सइ । शेषेषु अन्येषु चत्वारो भङ्गाः । कृष्णलेश्यः बद्धवान् बध्नाति भन्त्स्यति च द्वितीयो नास्ति यस्मादसौ नारकेषु तिर्यक्षु वा बध्नाति तस्मात्पुनर्बन्धो भविष्यति इति द्वितीयाऽभावः, तृतीयोऽबन्धकाले न बध्नाति बन्धकाले च बंधिस्सइ, चतुर्थो नास्ति न बध्नाति तेणऽवस्सयं बंधेयव्वं ।

असुरकुमाराः प्रष्टव्याः, पृथिवीकायिकस्तेलेश्यः तस्य तृतीयः पृथिवीकायिकेषूत्पद्यमानो यावदपर्याप्तकः तावल्लभ्यते, यदा च तेजोलेश्या अपगता तदा तेषामायुषो बंधस्तस्मात् तृतीयो भङ्गो बद्धवान्, बेधत्वे न

सम्यक्त्वे ज्ञाने-मतिज्ञाने श्रुतज्ञाने च चतुर्षु एतेषु विकलेन्द्रियेषु यावच्चैतानि तावदायुर्बन्धो नास्ति। 'पंचेन्दियतिरियाणं जहा नेरइयाणं, नवरं सम्मत्ते ओहिए नाणे अभिणिबोहियनाणे सुयनाणे ओहिनाणे बितिय विहूणा' किं ? यदा बध्नाति सम्यग्दृष्टिस्तदा मनुष्येषु बध्नाति मनुष्यत्वात् कदाचित् सिद्धिगतिमेव लमते तदाऽयं तस्माद्द्वितीयाभावः मनुष्याः सम्यक्त्वज्ञाने ओहे चतुर्षु च ज्ञानेषु द्वितीय विरहिताः यस्मान्मनुष्यो बध्धवान् बध्नाति यदा तदा देवेषु देवत्वाच्च मनुष्यबन्धेनाऽवश्यं भवितव्यं तस्मात् द्वितीयाऽभावः। नामगोत्रान्तरायाणि यथा ज्ञानावरणीयम्।

## ॥ इति षड्विंशतितमशतके प्रथमोद्देशः ॥

卐

## ॥ अथ षड्विंशतितमशतके द्वितीयाद्येकादशान्तोद्देशकाः—

'चरिमे णं भंते ! नेरइए' यदुक्तम्—चरिममस्य नारकत्वं न पुनर्नरकगतिं यास्यतीति, अचरमो यः पुनर्यास्यति नारकेषु इति।

## ॥ इति षड्विंशतितमशतके द्वितीयाद्येकादशान्तोद्देशाः ॥

## ॥ परिसमाप्तं च षड्विंशतितमं शतकम् ॥

## ॥ अथ सप्तविंशतितमं शतकम् ॥

एवमेव 'करिंसु करेंति करिस्संति त्ति' सयं अनयैव भावनया एवं नेयम् ।

## ॥ परिसमाप्तं च सप्तविंशतितमं शतकमेकादशोद्देशकिनम् ॥

## ॥ अथाष्टाविंशत्येकोनत्रिंशत्तमे शतके :—

"पट्ठवणसए किह णु समाउवसएसु चउभंगो । किह व समज्जणणसए 'गमणिज्जा अत्थओ भंगा ? ।१॥
पट्ठवणसए भंगा, पुच्छाभंगाणुलोमओ वच्चा । कम्मसमज्जणणसए, बाहुल्लाओ समाउज्जा ॥२॥"

## ॥ परिसमाप्ते अष्टाविंशत्येकोनत्रिंशत्तमे शतके ॥

## ॥ अथ त्रिंशत्तमं 'समोसरणसयं' शतकम् :—

'क्रियावादिनो ब्रुवते क्रिया प्रधानम् विज्ञानमक्रियावादिनो ब्रुवते किं क्रियया ! चित्तं विशुद्धकार्यं यथा बौद्धाः अज्ञानिनः सर्वं एव सत्त्वाः विनयमात्र एव धर्मः ।
तथाऽस्यैवार्थस्य सूचिका गाथा :—

"अत्थित्ति किरियवाई, वयंति नत्थित्तिऽकिरियवाइओ । अन्नाणिय अन्नाणं वेणइया विणयवायंति ॥१॥

## ॥ इति त्रिंशत्तमं 'समोसरणसयं' परिसमाप्तम् ॥

## ॥ अथैकत्रिंशत्तमं 'उववायसयं : —

'खुड्डा जुम्म नेरइया कओ उववज्जंति ? यदुक्तम्—चत्तारि वा अट्ठ वा बारस वा, एवं आद्या नारकाः कुत उत्पद्यन्ते ! यो हि जुम्मो य महंतो य सो महंतजुम्मो, जो पुण खुड्डओ चेव जुम्मो सो खुड्डाजुम्मो जहा चत्तारि अट्ठ बारस वा एवमादि । एव तेजोगादयो विभावणियव्वा ।

## ॥ इत्येकत्रिंशत्तमं 'उववायसयं' परिसमाप्तम् ॥

## ॥ एवं द्वात्रिंशत्तमं–उवट्टणासयं॥

## त्रयस्त्रिंशत्तम—एकेन्द्रियशतं ग्रन्थे एव सुज्ञानम्

## ॥ अथ चतुस्त्रिंशत्तमं सेढिसयं :—

'सेढियसयं' लोकनाडि प्रस्तीर्य भावनीयं गाथाश्चानुसर्त्तव्याः—

"सुत्ते चउसमयाओ, नत्थि गई उ परा विणिद्दिट्ठा । जुज्जइय पंच समया, जीवस्स इमा गई लोए ॥१॥

जो तमतमविदिसाए, समोहओ बंभलोगविदिसाए । उववज्जइ गईए, सो नियमा पंचसमयाए ॥२॥
उजुयाय तेगवंका, दुहओ बंका गई विणिद्दिट्ठा । जुज्जइ ति चउबंका वि, नाम चउ पंच समयाए ॥३॥
उववायाऽभावाओ, न पंच समयाऽहवा न संतावि । भणिया जह चउसमया, महल्लबंधेन संतावि ॥४॥

॥ परिसमाप्तं च चतुस्त्रिंशत्तमं 'सेढिसयम्' ॥

## ॥ अथ 'एगिदिय महजुम्म' नाम पञ्चत्रिंशत्तमं शतकम् :—

"कडजुम्म कडजुम्मेगिंदिया णं भंते ! कओ उववज्जंति !" यदुक्तम्—एकेन्द्रियाणामसंख्ये— यकडजुम्मा येऽपि चापहारचतुष्कतास्तेऽपि च कडयुग्मा:, त एतावन्त एकेन्द्रिया येऽसंख्येयासु कडजुम्मा अपहारश्च कडयुग्म: ते कुत उत्पद्यन्ते ? प्रश्न:—यथा षोडश । कडयुग्म तेजोगा उत्पद्यन्ते ये, ते सुहमसाहा चतुष्कका: कडयुग्मा: । अवह्रियमाणे च त्रयोऽतिरिक्ता: एकेन्द्रिया: त एकेन्द्रिया: कुत: ? यस्य एवंविधा संख्याराशेस्तत्प्रमाणा यथा एकान्नविंशति: । कडयुग्मबादरा उत्पद्यन्ते ये तेषामपहार: कथम् ? कडयुग्माऽपहृता विशिष्टौ च द्वौ यस्या: संख्याया: स कडयुग्मद्वापरा, तत्संख्याप्रमाण: कुत: ? यथाऽष्टादश, कडयुग्मकलि: यस्या: संख्याया: :चतुष्केणापहारेण एकाग्रो भवति सा कडयुग्मकलि: तत्संख्याप्रमाणं कुत: ? यथा सप्तदश ।

ते योगा कडयुग्मा यस्याः संख्यायाः चतुष्केणापहारेण अपहृते यावन्तोऽपहारचतुष्ककास्तेषां पुनश्चतुष्केणापहारेण त्रिरग्रता भवति ग्रं .... एप तेजोगकडयुग्मः यथा द्वादश, द्वादशानां चतुष्केणाऽपहारेण लब्धा अपहारश्चतुष्क-कस्त्रयः तेषां द्वयानां चतुष्केणाऽन्येन ह्रियमाणे त्रीणि अग्रे भवन्ति । यस्याः संख्याया एवमपहारः, अनेनापहारेणो-पलक्षिताः कुत उत्पद्यन्ते ? ते० ते योगाः यथा पञ्चदश, पञ्चदशानां चतुष्केणाऽपहारेण त्रयः शेषाः-लब्धास्त्रयः ये ते लब्धास्तेषां पुनश्चतुष्कापहारः क्रियमाणस्त्रिरग्रः अपहारचतुष्ककास्त्रिरग्राः, पूर्वसंख्या च त्रिसंख्याया एवंविधा संख्या कुत उत्पद्यन्ते ? ते योगा बादर यथा चतुर्दश, चतुर्दशानां चतुष्केणाऽपहारेण द्वौ अग्रे येऽवभागापहतचतुष्कका यथा त्रयः, तेषां पुनश्चतुष्केणाऽपहारेण त्रिरग्रता पूर्वस्य च राशेः द्वौ अग्रेवं, एवंविधा राशिश्च संख्या प्रमाणः कुत उत्पद्यन्ते ? एवं नेयम् ।

येषां प्रथमश्च समयसंख्यया च कडयुग्माकडयुग्मास्ते कुत उत्पद्यन्ते ? द्वित्र्यादि वा समयाः येषा-मुत्पन्नानां संख्यया च कडयुग्माकडयुग्मास्ते कुतः ? येषां वर्तते चरमसमयश्च संख्यया च कडयुग्मा अचरमो वा समयः, यदुक्तम्—द्वौ त्रयो वा चत्वारो वा येषां शेषाः, सम्यगेव कडयुग्मकडयुग्मास्ते कुतः ? पढमसमय-कडजुम्मेगिंदिया णं कओ उववज्जंते ? कडयुग्मसंख्या उत्पातेन ये प्रथममनुभवन्ति प्रथमश्च समयो वर्त्तते ते एकेन्द्रियाः कुत उत्पद्यन्ते ! न प्रथमः समयो वर्तते वा कडयुग्मकडयुग्मसंख्याः प्रथममेवानुभवन्ति तेषां

पाचरमसमयः कडयुग्मकडयुग्मसंख्याः प्रथममेवानुभवन्ति, एवमचरमः, इदानीं चरमाः कडयुग्मकडयुग्मसंख्यामनुभवन्ति चरमसमयास्ते कुतः ? एवमचरमः ।

## ॥ इति पञ्चत्रिंशत्तमं 'एगिंदिय महजुम्मं सयं' परिसमाप्तम् ॥

卐

शेषाणि शतानि अनेनैव च लक्षणेन गमनीयानि ।

"लोगागासपएसा, धम्माधम्मेगजोवदेसा य । दव्वट्ठिया णियाया पत्तेया तेसि जोवाणं ॥१॥
१ २ ३ ४ ५ ६
ठिइबंधज्झवसाया, अणुभागा जोगच्छेअपलिभागा । दोण्ह य समाण समया, असंखपक्खेवआ दसओ ॥२॥
७ ८ ९ १०
सिद्धा णिगोयजोवा, वणस्सतो काल पोग्गला चेव । सव्वमलोगागासं, छप्पिएऽणंतपक्खेवा ॥३॥"

## ॥ इति भगवत्यवचूर्णी समाप्ता ॥

[ पठनपाठनकर्तृभ्यः शुभं भवतु ]

ग्रंथाग्रं ३११८

# भगवती सूत्र बीजकम् ।

प्रणम्य परया भक्त्या, परमान् परमेष्ठिनः ।
कुर्वे हर्षकुलाख्योऽहम्, भगवत्यङ्गबीजकम् ॥

१ श्रीभगवत्यङ्गबीजकं लिख्यते । प्रथमशते प्रथमोद्देशके श्रीवीरवर्ण्णनं श्रीगौतमवर्ण्णनं च । प्रश्नप्रकारः । 'चलमाणे चलिए' इत्यादिः प्रश्नः । नारकाणां स्थित्युच्छ्वा-साहाराः । तेषां पूर्वाहृता आह्रियमाणा आहरिष्यमाणा वा पुद्गलाः परिणमन्ति, चीयन्ते, वेद्यन्ते, निर्जीर्यन्ते । अणवो बादराश्च पुद्गला भिद्यन्ते । उदीर्यन्ते वेद्यन्ते सङ्क्रमनिधत्तनिकाचना प्रश्नाः । वर्तमानकालपुद्गलान् तैजसकार्मणतया गृह्णन्ति वेदयन्ति । उदीरयन्ति । तथा चलितकर्मणो बन्धोदीरणवेदनाविनिर्जरा चेति नारकिसम्बन्धि-प्रश्नाः । एवमसुरकुमारादिचतुर्विंशतिदण्डकेष्वेते प्रश्नाः ।

२ जीवा आत्मपरतदुभयारम्भाश्च जीवा द्विधा-सिद्धाः सांसारिकाः संयताऽसंयताश्च, नैरयिकादिष्वयं दण्ड-केषु च प्रश्नः । ऐहभविकं पारभविकं तदुभयभविकं वा ज्ञानं दर्शनं चारित्रम् । असंवृतः सिद्धयति संवृतो वा । अकामक्षुत्तृड्बाधिता जीवा व्यन्तराः स्युः । व्यन्तरदेवलोके कीदृशाः जीवाः स्वकृतं दुखं किञ्चि-

द्वेदयन्ति किञ्चिन्न । एवं दण्डकेषु नैरयिकाः । सर्वे समशरीरोच्छ्वासाहारकर्मवर्णलेश्यावेदनाक्रियायुरुत्पत्तयः सम्यग्मिश्रमिथ्यादृशोऽपि । एवं दण्डकेषु नृभेदाः संयताऽसंयताः सरागवीतरागाः वीतरागसंयताः । अक्रियाः । सरागसंयताः प्रमत्ता अप्रमत्ताश्च । अप्रमत्तानां मायाक्रिया, प्रमत्तानां आरम्भक्रिया मायाक्रिया च । श्राद्धानां आद्यास्तिस्रः । असंयतानां चतस्रः । मिथ्यादृशां पञ्च मिश्राणां पञ्चैव क्रियाः लेश्याः भवावस्थानकालः कतिविधिः शून्य-अशून्यमिश्रकालाः अल्पबहुत्वं तेषां अन्तक्रियाप्रश्नः असंयता अविराधितविराधितसंयमासंयमाऽसंज्ञितापसचरकादीनां कस्य क्व देवेषूत्पादः । असंज्ञ्यायुर्बन्धभेदास्तदल्पबहुत्वम् ।

३ जीवाः काङ्क्षामोहनीयं देशतः सर्वतो वा कृतं कुर्वन्ति । करिष्यन्ति वा एवं दण्डकेषु । एवं तस्यैव चयोपचयोदीरणावेदनानिर्जराश्च । तदेव कर्म जीवाः कथं वेदयन्ते । 'तदेव सत्यं निःशङ्कं यज्जिनोक्तं' इति कुर्वन् आराधकः अस्तित्वमस्तित्वे नास्तित्वं च नास्तित्वे परिणमति गमनीयं च । काङ्क्षामोहनीयं जीवाः कथं बध्नन्ति प्रमादात् योगात् योगो वीर्यात् वीर्यं शरीरात् शरीरं भवात् । एवं सत्युत्थानकर्मबल वीर्याणि । उदीर्णमनुदीर्णं वा उदीरयति । तत्स्थानबलादिभिः । एवमुपशाम्यति आत्मनैव गर्हति संवृणोति जीवः अनुदीर्णमुपशमयति । एवमात्मना वेदयते निर्जरयति । दण्डकेषु काङ्क्षामोहनीयवेदनप्रश्नः ।

श्रमणा अपि ज्ञानान्तरदर्शनान्तरादिभिः काङ्क्षामोहनीयं वेदयन्ते तदेव सत्यं यज्जिनोक्तम् ( इति भावनया )।

४ कति कर्म प्रकृतयः, जीवो मोहनीयेन कृतेन परलोकक्रियाङ्गीकारं बालपण्डितवीर्यतः कुर्यात्। उत्तमगुणस्थानाद्धीनगुणस्थानं गच्छेत्। एवं उदीर्णेन उपशान्तेन च प्रश्नः। पापकर्मणोऽवेदित्वा न मोक्षः। प्रदेशकर्म वेद्यते।

५ अनुभाग-कर्म वेद्यते वा न वेद्यतेऽपि। पुद्गलोऽपि अभूत्। भवति भविष्यति। स्कन्धोऽपि। छद्मस्थः सिद्धयति न वेति। जिनः सिद्धयति। अलमस्त्विति। कति पृथ्व्यः। तासु कति नरकावासाः। कति असुरावासाः एवं दण्डकेषु नरकावासेषु कियन्ति नारकिस्थितिस्थानानि। नारकाः किं क्रोधोपयुक्ताः मानोपयुक्ताः मायोपयुक्ताः लोभोपयुक्ताः। ८० भङ्गाः तेषां अवगाहनया भङ्गाः। एवं दण्डके क्रोधोपयुक्तादिभङ्गाः।

६ उद्गच्छन् सूर्यो यावदवकाशाद् दृश्यतेऽस्तमयन्नपि तावतः। एवं प्रकाशोऽपि लोकान्तोऽलोकान्तं स्पृशति एवं छायान्त आतपान्तं। प्राणातिपातेन क्रिया क्रियते सा किं स्पृष्टा वा अस्पृष्टा वा? षट् पञ्च चतुस्त्रिदिक्षु स्पृष्टा नैरयिकादिदण्डके। प्राणातिपाताद्यष्टादश पापस्थानैः क्रियारोहकप्रश्नाः पूर्वं लोकोऽलोको वा। जीवा अजीवा वा। अण्डकं कुर्कटी वा पूर्वं लोकः कालो वा। लोकस्थितिरष्टधा तत्र वायुपूर्णदृतिदृष्टान्तः जीवपुद्गलयोरन्योन्यानुगमः। तत्र हृदनौदृष्टान्तः।

७ नारकी नरके उत्पद्यते । देशतः सर्वतो वा । एवमाहारोद्वर्तने । दण्डके च । जीवो विग्रहगतिसमापन्नोऽन्यो वा दण्डकेष्वयं प्रश्नः । देवः च्यवनकालेनाहारकः पश्चादाहारकः यत्रोत्पद्यते । तदायुर्वेदयते जीवो गर्भगतः सेन्द्रियो वा सशरीरी वा किं आहारयति कवलिकाहारो गर्भे स्यान्न वा । उच्छ्वासनिच्छ्वासौ नीहारो वा स्यात् । स जीवो नारके स्वर्गे वा उत्पद्यते । स किंसंस्थानः । ततः सद्वर्णो वा दुर्वर्णो वा ।

८ एकान्तबालो मनुष्यः एकान्तपण्डितो वा बालपण्डितो वा । किमायुः प्रकरोति । मृगहन्तानरः कतिक्रियः अन्यारम्भकश्च । एको मृगजिघांसुः अन्यस्तच्छिरश्छेत्ता । द्वयोः को बन्धः षण्मासान्तर्मृतौ पञ्च क्रियाः द्वयोः सङ्ग्रामकारिणोरेको जयति । परः पराजीयते । जीवाः संसारिणः सिद्धाश्च । सवीर्या वा अवीर्याः । एवं दण्डके प्रश्नः ।

९ जीवाः कथं गुरुत्वं लघुत्वं वा लभन्ते । कथं भवं दीर्घं ह्रस्वं वा कुर्वन्ति । नारकान्तरावकाशाः पृथिव्यश्च लघुका गुरुका वा दण्डकेऽयं प्रश्नः । धर्मास्तिकायादिषु च पुद्गलाः । सलेश्या जीवा मनोवाक्काययोगिनः सर्वद्रव्याणि पर्यायाः कालश्च गुरुर्लघुर्वा । श्रमणानां लघुत्वं श्रेयः क्रोधाद्यभावश्च ।

असंवृतः संवृतो भूत्वा सिद्ध्यति। परे वदन्ति एको जीव एक समये आयुर्द्वयं प्रकरोति तत् कथं ? कालासवेसिअनामा श्री पार्श्वशिष्यः स्थविरानवादीत्। यूयं सामायिकप्रत्याख्यानाद्यर्थं न जानीतेत्यादि तदुत्तरान्तस्य प्रबोधः। पञ्चव्रतप्रतिपत्तिः 'जस्सट्ठाए कीरइ' इत्यालापकः स सिद्धश्च। आढ्यस्य दरिद्रस्य च समैव क्रिया। आधाकर्म प्रासुकं च भुञ्जानः साधुः किं बध्नाति अथिरे पलोट्टइ नोथिरे इति।

१० परे वदन्ति चलदचलितं द्वावणू न मिलतः। तदुत्तरं च पूर्वं पश्चाद्वा भाषा द्वे क्रिये युगपन्नरकादिविरहः। इति प्रथमं शतं समाप्तम्।

卐

१ द्वितीयशते पृथ्वीकायिकादीनां उच्छ्वासः कथं वायोश्च कथं चत्वारि शरीराणि। वायोः मृतादीनि ग्रन्थोऽपि संसारे भ्रमति। प्राणभूतादि शब्दवाच्यश्च। खन्दकसम्बन्धः लोकजीवमुक्ति सिद्धाः सान्ता अनन्ता वा।

२ बालमरणं द्वादशधा। पण्डितमरणं द्विधा इति प्रश्नाः। (ग्रन्था० १००० ) भिक्षुप्रतिमा गुणरत्नसंवत्सरतपोविचारः। खन्दकस्याच्युतगतिः। ३ समुद्घात विचारः।

४ इन्द्रियविचारः। ५ परे वदन्ति साधुः स्वर्गे गतः स्वपरदेवीभिर्भोगं करोति। वेदद्वयं वेदयते।

जलगर्भः तिर्यंगमनुष्यगर्भश्च कियत्कालं । एकजीवः कियतां पुत्रः कियतां पिता च । मैथुनेऽसंयमः ।
तुङ्गिकानगरीश्राद्धवर्णनं स्थविरागमनं । पञ्चाभिगमाः संयमतपसी किं फले केन कर्मणा देवत्व प्राप्तिः ।
६ श्रीगौतमगोचरचर्याश्रमणसेवा । श्रवणज्ञानविज्ञानप्रत्याख्यान ।
७ संयमसंवरतपोच्यवदानाऽक्रियासिद्धयः किंफलाः । उष्णजलो ह्रदः भाषाविचारः देवाश्चतुर्विधाः देवानां
क्व स्थानानि । ८ ।
९ चमरेन्द्रसौधर्मसभावर्णनं । चमरचञ्चा राजधानी । समयक्षेत्रविचारः पंचास्तिकायभेदव्याख्या अध-
स्तिर्यगूर्द्ध्वलोकेषु कोऽस्तिकायः कियान् । द्वितीयशतकं समाप्तम् ।

卐

१ छंमोआनगरी । चमरस्य का ऋद्धिः । तत्सामानिकानां । तल्लोकपालानां । तद्देवीनां च । बलीन्द्र
धरणेन्द्रादीनां ऋद्धिः । तीसगकुरुदत्तयोः सम्बन्धः । शक्रेशानऋद्धिः । कूडाकारशाला । तामलिसम्बन्धः
शक्रेशानयोर्विमाना उन्निम्ना उन्नताश्च । तयोर्विवादः । सनत्कुमारो भवसिद्धिकः । तदायुः ।
२ रत्नप्रभायां असुरकुमारस्थानः तेषामुद्धर्वाधोगतिः कियती । ते सौधर्मेयान्ति अरोमिभेगि कुर्वन्ति । वैरेण वा
यान्ति । अर्हच्चैत्य निश्रया ते ऊर्ध्वं यान्ति चमरसम्बन्धः पूर्वभवयुतः ग्रं० २००० इदं वज्रचमराणां गतेरल्पबहुत्वं।

३ पञ्चक्रियाः सभेदाः पूर्वं वेदना पश्चात्क्रिया वा । श्रमणानां क्रिया यावत् जन्तुरारम्भसंरम्भसमारम्भात् करोति । तावदन्त क्रियाना पश्चाद्भवति । तृणानि दृष्टान्तः । तप्तायसि जलबिन्दुदृष्टान्तः । ह्रवनो दृष्टान्तः । ईर्यापथिको विप्रमत्ततायां अप्रमत्ततायाश्च ।

४ कालकथं । लवणसमुद्राश्चतुर्दश्यावो वर्द्धते । साधुः कृतवैक्रियं देवं यानं देवीं पश्यति न वा । वृक्षस्य मध्यं बहिर्वा फलं बीजं वा पश्यति । वायुः स्त्रीपुरुषरूपं विकुर्वंति । न वा पताकादिकं विकुर्वंति । एवं मेघस्यापि विकुर्वंति एवं मेघस्यापि विकुर्वणा । नारकावो कया लेश्यया याति । बाह्यपुद्गलानादाय साधुर्वैक्रियं करोति समायी अमायी वा ।

५ साधुः कतिरूपाणि विकुर्वते खड्गखेटकपाणिः साधुः यज्ञोपवीतं हस्त्यश्वादि रूपं च मायी कुर्यात् ।

६ विभङ्गज्ञानी राजगृहादिकमन्यथा वेत्ति । अवधिज्ञानी तु सत्यं पुरादि विकुर्वणा । चमरादीनामात्मरक्षसङ्ख्या ।

७ शक्रेशानयोर्लोकपाल विमान वि० । चतुर्णां लोकपालानां जम्बूद्वीपे स्वस्वकर्त्तव्यविचारः तेषामायुः ।

८ असुरव्यन्तरचन्द्रसूर्यवैमानिकेषु कति देवा पेश्वर्यंकराः ।

९ इन्द्रियविषयविचारः चमरादीनां कतिपर्षदः । ( तृतीयं शतं समाप्तम् । )

१० ४ ईशानलोकपालविमानविचारः ॥ तद्राजधान्यः ॥ नारकी नरकेषूत्पद्यतेऽन्यो वा । कृष्णलेश्या नीललेश्यां प्राप्य तद्रूपा स्यात् ॥१०॥ ( तृयं शतं समाप्तम् । )



१ सूर्या पूर्वनैऋतादि सर्वदिक्षु उद्गच्छन्ति । जम्बूद्वीपे यदा दक्षिणस्यां दिनं तदा उत्तरस्यां दिनं रात्रिर्वा। जघन्योत्कृष्टदिनरात्रिमानं विदेहादौ भरतैरावतयोर्यदा वर्षादिऋतुः तदा विदेहेष्वपि । एवं धातकी-खण्डादिषु दिनरात्रिनिर्णयः ।

२ पूर्वपश्चिमयोः द्वीपसमुद्रवायुः साम्यं । यदा वायुकुमारास्तत्कुमार्यश्च वायुमुदीरयन्ति । तथा ईषत् वाताः वायुर्वायूच्छ्वासकरः अग्निपक्वं धान्यं अयस्ताम्रादिधातवो भस्मादिव तेजस्कायशरीराणि ३ ।

३ परे वदन्ति एकजीवस्य बहून्यायूंषि आयुर्द्वयं चेवेदयते नारकादिर्नरकादौ सायुः सङ्क्रमते निरायुर्वा चतुर्गत्यायुर्बन्धकजीवे भेदाः ।

४ छद्मस्थः शङ्खभेर्यादिशब्दान् आराद्गतान् शृणोति । केवली तु आरात् परतश्च सर्वं वेत्ति । छद्मस्थो हसन् कति कर्मप्रकृतीर्बध्नाति । एकत्वबहुत्वाभ्यां भङ्गाः । छद्मस्थो निद्रायमाणः कतिकर्मबन्धकः । हरिणेगमेषी गर्भं संहरन् किं गर्भाद्गर्भमित्यादि । अतिमुक्तककुमारसम्बन्धः । महाशुक्राद्देवद्वयं श्रीवीरांतिक

भागत्य पप्रच्छ भगवच्छिष्याः कति सेत्स्यन्तीति । देवाः संयता असंयता नोसंयता वा । तेषां अर्द्ध-मागधी भाषा । केवली चरमशरीरिणं वेत्ति । छद्मस्थस्तु प्रमाणतो वेत्ति । प्रमाणं चतुर्विधं प्रत्यक्षादि । आत्मागमः परंपरागमः । केवली चरमं कर्म वेत्ति केवली प्रणीतं मनो वचो वा धरति तद्देवा जानन्ति नवा । अनुत्तरसुरास्तत्रस्था एव केवलिना सहालापं कुर्वन्ति तत्रस्था एव विदन्ति । ते उपशान्तमोहाश्च । केवली ।

१ इन्द्रियैर्वेत्ति येष्वाकाशप्रदेशेषुस्थितस्तेषु पुनः स्थातुं न शक्नोति । चतुर्दशपूर्वी घटात् घटसहस्रं करोति परे वदन्ति सर्वे जीवा एवंभूता वेदनां वेदयन्ते अनेवंभूता वा ।

६ कुलकर तीर्थंकरमातृपितृ चक्रिबलदेवादिसंख्या । अल्पायुर्दीर्घायुरशुभदीर्घायुः कथं बध्यते । गृहिणो भांडं कश्चिदपहरति । स तद् गवेषयन् कतिक्रियः । क्रेता विक्रेता च कतिक्रियः । अग्निः प्रज्वलितो महाकर्मा पश्चादल्पकर्मा । नरो धनुषा बाणं मुञ्चन् कतिक्रियः धनुशरज्यादयोपि कति क्रियाः । परे वदन्ति चतुः पञ्च वा योजनशतानि नराकीर्णो नरलोकः इति तदुत्तरं च । नारकी एकत्वं बहुत्वं वा विकुर्वंति । आधाकर्म निरवद्यं वदन् क्रीतादिकं कान्तारदुर्भिक्षादिभक्तं निरवद्यं वदन् आराधकः ।

आचार्य उपाध्यायो वा गणं पालयन् कतिभवः । अभ्याख्यानदाता कीदृक्कर्मबन्धकः । परमाणुश्चलति । एवं द्विप्रदेशादिस्कन्धोपि ।

७ परमाणुश्छिद्यते । एवमनन्तप्रदेशस्कन्धोपि छिद्यते नवा अग्निना दह्यते जलेन क्लिद्यते नवा । अणुः सार्द्धः अनर्द्धो वा । एवमनन्तप्रदेशस्कन्धोपि । अणुं स्पृशन् अणुः किं देशेन सर्वेण स्पृशति । द्रव्यतः कालतः क्षेत्रतश्च परमाणुः कियच्चिरं चलो वा । तस्य कालादि वर्णाः । अन्तरकालः । अणोर्द्रव्यक्षेत्रकालभावायुषा-मल्पबहुत्वं नारकादयः सारम्भाः सपरिग्रहाः कस्य कः परिग्रहः पञ्चहेतवोऽहेतवश्च ।

८ नारद पुत्रं साधुं निर्ग्रन्थीपुत्रः साधुः पप्रच्छ । पुद्गलाः किं अनर्द्धाः सार्द्धा वा द्रव्यक्षेत्रकालभावादेशैः जीवाः किं वर्द्धन्ते हीयन्ते वा । एवं दण्डके जीवाः कियच्चिरमवस्थिताः नारकादयश्च कियच्चिरन्तेवर्धन्ते हीयन्तेऽवस्थिता वा । जीवास्सोपचयाः सापचयाः एवं दण्डके उत्पत्तिच्यवनविरहः । राजगृहं नगरं पृथ्वीकायरूपं अप्कायादिरूपं वा । दिने उद्योतः रात्रौ अन्धकारः किम् ? एवमुद्योतान्धकारप्रश्नो दण्डके नारकादौ कालो वर्त्यते मनुष्यादौ वा । असंख्यो लोकः (ग्रं० ३०००) अनन्तः कालः लोकसंस्थानं किं ? श्रीपार्श्वशिष्याणां प्रश्नः । कति देवलोकाः ? तद्भेदाः । चम्पायां चन्द्रोदयप्रश्नः । पंचमं शतं समाप्तम् ।

१ ये महावेदनास्ते महानिर्जरा चतुर्भङ्गी दृष्टान्तः । द्वितीय आहारोद्देशकः ।
२ महाश्रवस्य महाक्रियस्य महाकर्मबन्धः विपरीतस्य तु स्तोकः । तत्र वस्त्रमलिनत्वोज्ज्वलत्वदृष्टान्तः ।
३ जीवानां प्रयोगतः कर्मोपचयो न विस्रसातः । त्रिविधः प्रयोगो दण्डके कर्मोपचयः सादिः सान्तो वा चतुर्भंगी जीवा नारकाश्चानादयः सादयो वा । गतिं कविध चाश्रित्य कति कर्मप्रकृतयः, कर्मणां स्थिति कालः अबाधानिषेकश्च ज्ञानावरणीयादिकर्मबन्धकाः के ज्ञानिनोऽज्ञानिनो वा सम्यग्दृशो मिथ्यादृशो वा इत्यादि द्वाराणि वेदत्रयाल्पबहुत्वम् ।
४ जीवाः कालद्रव्याद्यपेक्षया सप्रदेशोऽप्रदेशो वा सर्वं जीवानां २६ द्वारेषु प्रश्नः । जीवाः प्रत्याख्यानिनोऽप्रत्याख्यानिनो वा जीवाः प्रत्याख्यानं जानन्ति कुर्वन्ति । प्रत्याख्यानेन बद्धायुषोन्यथा वा तमस्काय विचारः । कृष्णराजी विचारः । लोकान्तिकस्वरूपम् ।
५ कति पृथ्व्यः जीवो मरणसमुद्घातं कृत्वा उत्पत्ति-
६ स्थानं गत्वा पुनः पूर्वशरीरे पश्चादागत्य समुद्घातान् म्रियते । सर्वदण्डकेष्वेवमेव ।
७ धान्यानामचित्तताकालः । एकस्मिन् मुहूर्ते कति उच्छ्वासाः उच्छ्वासे आवल्यः, प्राणस्तोकलवदिनमासादि

मानं शीर्षप्रहेलिकान्तं । परमाणु ३--सरेण्वादिपल्योपमसागरोपमान्तं षडरकमानं ।

८ पृथ्वीनामधो गृहाणि मेघाश्च संति न वा । बादरपृथिवीकायिकादयः स्वर्गादौ क्व सन्ति । जातिगति-
स्थित्यवगाहप्रदेशानुभाग नामनिधत्तायुषां बन्धो दण्डके लवणाब्धिः क्षुब्धजलः नान्ये समुद्राः द्वीपाब्धि
नामानि देवो बाह्यपुद्गलाननादाय रूपादि विकुर्वंति नवा ।

१० नैरयिकानां सुखं दुःखं वा मातुं कोपि न प्रभुः तत्र गन्धसमुद्गकदृष्टान्तः । जीवो जीवति यो जीवति
स जीवः एवं जीवाः । स नारकी यो नारको स जीवो वा इत्यादि परे वदन्ति । जीवानां दुःखमेव
तत्रोत्तर सातासातविचारः जीवाः स्वशरीरावगाढपुद्गलानेवाहारादितया गृह्णन्ति न दूरस्थान् ।
षष्ठं शतं समाप्तं ।



१ जीवः कस्मिन् समयेऽनाहारकः आहारको वा । सर्वाल्पाहारकः स कदा । लोकः किं संस्थानकः । श्राद्धस्य
ईर्यापथिकी क्रिया साम्परायिकी वा । कृत सामायिकः त्रसप्रत्याख्यानी श्राद्धः पृथ्वीं खनन् त्रसं
हन्ति स प्रत्याख्यानमतिचरति न वेति । एवं वनस्पतिहन्तापि श्राद्धः प्रासुकाहारं साधुभ्यो ददानः

किं लभते किं त्यजति। अकर्मकस्य मुक्तौ गमनं कथं। अत्र तुम्ब मुद्गफलिकाधूमबाणदृष्टान्तः। दुःखा-दुखेन स्पृष्टो दुःखी वा। एवं दण्डके साधोरनाकायुक्तमुत्सूत्रं गच्छतः साम्परायिकी क्रिया। यथा सूत्र० मायुक्तं गच्छतस्तु ईर्यापथिकी। यः कषायी स उत्सूत्रमेव प्रवर्त्तते साङ्गार १ सधूम २ संयोजना ३ दोषाः के। व्यंगार १ विधूम २ संयोजनामुक्ताहार ३ कथं। क्षेत्र० १ काल २ मार्ग ३ प्रमाण ४ अतिक्रान्त पानभोजनस्य कोऽर्थः कुर्कुटयण्डमानकवलः। ऊनोदरता। साधुः कीदृशं शुद्धाहारं गृह्णाति। प्रत्याख्यातमिति। वदतः सुप्रत्याख्यातं वा दुःप्रत्याख्यातं वा स्यात्। जीवाजीवौ जानत् सुप्रत्याख्याता प्रत्याख्यानं कतिधा। सर्वं मूल प्रत्या० देशमूलगुण प्रत्या० कतिधा सर्वोत्तर प्रत्या० देशोत्तरगुण प्रत्या० कतिधा जीवाः कीदृग् प्रत्याख्यानवन्तः। दण्डके तदल्पबहुत्वं। जीवाः संयता असंयता वा प्रत्याख्यानिनोऽप्रत्याख्यानिनो वा शाश्वताऽशाश्वता वा दण्डके।

३ वनस्पतय. कस्मिन् कालेऽल्पाहाराः महाहारा वा। तेषां कथमाहारः मूलामूलजीवस्पृष्टाः। पृथिवी जीव प्रतिबद्धा इति। अनन्तकायानां नामानि। किंलेश्या नारका अल्पकर्माणो बहुकर्माणश्च। एव दण्डके या वेदना सा निर्जराऽन्या वा। एवं दण्डके। कर्मणो वेदना। नो कर्मणो निर्जरा। वेदना निर्जरा कालयोः पार्थक्यं।

४ नारकादयः शाश्वता अशाश्वता वा। संसारसमापन्ना जीवाः कतिविधा वा।

५ वा त्रिविधा योनिः ।

६ यो नारकत्वेन उत्पद्यते । स तदायुः क्व बध्नाति । क्व वेदयते । इह भवे नारकीभवे वा । क्व
महावेदनः । एवं दण्डके । जीवा आभोगनिर्वर्तितायुषः अनाभोगनिर्वर्तितायुषो वा । एवं दण्डके ।
कर्कशवेदनीयानि कर्माणि कथं क्रियन्ते सातवेदनीयानि च कथं । अवसर्पिण्यां षष्ठारकः कीदृग् दुःखकृत् ।
तत्र नराः कीदृशाः क्व वसिष्यन्ति । तेषां किमायुः । किं देहमानं । किमाहारः । तिर्यंचोपि तथाविधाः ।

७ संवृतसाधोरायुक्तस्य ईर्यापथिकी क्रिया साम्परायिकी वा कामाः भोगाश्च रूपिणः सचित्ता अचित्ता
वा । कतिविधाश्च जीवाः कामिनो भोगिनो वा । एवं दण्डके तेषामल्पबहुत्वं । स्वः प्राप्तो देवः किं
क्षीणभोगी अधोवधिकः परमावधिकश्च केवलीव तद्भवसिद्धः । पृथ्वीकायिकादयोऽकामनिकरणं वेदनं
वेदयन्ते समर्था अपि एवं त्रिधिवेदना । प्रकामनिकरणवेदना च तेषां कथम् ।

८ हस्तिनः कुन्थोश्च समो जीवः नारकिणां निर्जीर्ण्णं कर्म शुभं एवं दण्डके १० संज्ञादण्डके १० संज्ञादण्डके
नरके १० वेदना हस्तिकुन्थ्वोः समा क्रिया ।

९ असंवृतो बाह्यपुद्गलादाने विकुर्वंति । महाशिलाकण्टकरथमुशल सङ्ग्रामो ग्रं० ४००० कोणिक
चेटकराजवरुणसम्बन्धाः ।

१० राजगृहे कालोदायिप्रमुखा अन्यतीर्थिका गौतमं पृच्छन्ति । पञ्चास्तिकायाः के तेषां प्रतिबोधः चारित्रं च पापकर्माणि पापफलविपाकानि । तत्र भोजन दृष्टान्त० । एकः पुरुषोऽग्निं ज्वालयति एको निर्वापयति । तयोः कस्य कर्मबन्धः स्तोको महान् वा । अचित्तपुद्गलाः प्रकाशकाः के । सप्तमं शतं समाप्तम् ।

१ प्रयोगमिश्रविस्रसापरिणताः पुद्गलाः । एकेन्द्रियादिप्रयोगपरिणताः पुद्गलाः । एवं जीव चतुर्गति जीव-भेदाः सर्वे सप्रभेदा शरीरेन्द्रियवर्णादिद्वारैर्नवदण्डकाः । एवं मिश्रपरिणताः पुद्गलाः विस्रसापरिणताश्च एकं द्रव्यं किं मिश्रपरिणतं प्रयोगपरिणतं विस्रसा परिणतं वा । सत्यादिर्मनःप्रयोगः सत्यादि वा किं प्रयोगः औदारिकादिः सप्तधा कायप्रयोगः कायादिप्रयोग चिन्तासर्वजीवेषु एवं मिश्र विस्रसा परिणामावपि

२ सविचारो । कतिविधा आशीविषा एवं दण्डको १० स्थानानि छद्मस्थो न वेत्ति मत्यादि ज्ञानज्ञानभेदो अवग्रहेहाभिदश्च जीवाः किं ज्ञानिनोऽज्ञानिनो वा । एवं दण्डको सेन्द्रियसकायिकसूक्ष्मादिद्वारेषु

३ तथा १० लब्धयस्तासु च ज्ञानिनो वेति प्रश्नः । ज्ञानपर्यायाः कति वृक्षाः कतिविधाः । कूर्मादयो जीवा

४ द्विधा त्रिधा वाच्छिन्नाः । अन्तरा जीवप्रदेशाः कति पृथ्व्यस्ताश्चरमा अचरमा ताः ।

५ कति क्रिया इति सामायिकवतः श्राद्धस्य कश्चिद्भाण्डमपहरति जायां वा सेवते तदा श्राद्धस्य भाण्डमभाण्डं जायाऽजाया स्यान्न वा त्रिविध त्रिविधाद्य एकोनपञ्चाशत् प्रत्याख्यानभङ्गा आजीविकश्राद्धविरतिः श्रमणोपासकानां पञ्चदशकर्मादाननिवृत्तिस्त्रिविधत्रिविधेन कति देवलोकाः ।

६ श्राद्धः शुद्धमाहारं साधवे ददानः । अशुद्धमाहारं २ शुद्धाशुद्धमाहारं च साधवे ददानः साधवे(छ्यै) वा ददानः किं करोति ? कश्चित् साधवे पिण्डद्वयं दत्त्वा वक्ति । एकं त्वं गृहाण अन्यः स्थविरेभ्यो देयः साधुः स्थविराणामलाभे तं पिण्डं परिष्ठापयति । एवं वस्त्रपात्राद्यपि ? साधुरकृत्यं सेवित्वा आलोचनायैस्थविरपार्श्वे याति अन्तरा कालं कुर्यात् स्थविरावाऽवाचका अभूवन् । तथाप्यसौ आराधकः । एवं निर्ग्रन्थ्या अकृत्यसेवनेपि । तत्र ऊर्णा वणयोर्दृष्टान्तः प्रदीपो गृहं वा ज्वलति । जीव औदारिकादिशरीरविनाशापेक्षया कतिक्रियः । एवं दण्डके एकत्वबहुत्वाभ्यां प्रश्नः ।

७ तीर्थिक प्रश्नः पात्रे दत्तं अदत्तं दत्तं सत् पात्रे अपतितं कश्चिदपहरति । तत् कस्य सत्कं तथा, मार्गे गच्छन्तः स्थविराः पृथ्व्यादिर्हिंसतीति बालाः स्युः । तत्रोत्तरं गतिप्रवादः कतिधा गुरून् प्रतीत्य कति प्रत्यनीकाः एवं गतिं कुलं समूहं अनुकम्प्य च श्रुतं भावं प्रतीत्य च पञ्च व्यवहाराः ईर्यापथिकबन्धः १ साम्परायिकबन्धः २ कः कस्याः स्त्री

पश्चात्कृता पुरुषपश्चात्कृतो वा क्लीबपश्चात्कृतो वा बध्नाति भ्रंश्यते वा । सादि सान्तं वा । अनाद्यनन्तं वा । देशतः सर्वतो वा कति कर्मप्रकृतयः । २२ परीषहाः केवलिनश्च जम्बूद्वीपे सूर्यौ दूरे मूले दृश्यते ग्रं० ५००० अतीतं क्षेत्रं भासयन्ते । इन्द्रस्थानं कियत्कालशून्यं ।

९ प्रयोगविस्रसा बन्धोसा मादिरान्तौ । अनाद्यनन्तौ वा । धर्माधर्माकाशास्तिकायानां को बन्धः । गृहप्रासादकूपादीनां प्रयोगबन्धः कियत्कालमिति शरीरबन्धः । शरीरप्रयोगबन्धश्च कतिविधः । कियत्कालं च एकेन्द्रियादीनां सर्वबन्धान्तरं । देशबन्धान्तरं च कियत् पञ्चशरीरप्रयोगबन्धः सविस्तरः तदल्पबहुत्वं कर्माष्टकबन्धहेतवः चतुर्गत्यायुर्बन्धहेतवः कर्मस्थितिकालः । औदारिकादिशरीरं बध्नन् वैक्रियादिशरीरं बध्नाति न वा तदल्पबहुत्वं ।

१० शीलं श्रेयः श्रातं वा शीलवान् आराधकः श्रुतवान् । त्रिविधा आराधना । उत्कृष्टमध्यमजघन्यज्ञानाराधनया । तादृग्दर्शनाराधनया तादृग्चारित्राराधनया च कति भवाः स्युः । कतिधा पुद्गलपरिणामः । वर्णादिभेदैः एकः पुद्गलास्तिकायप्रदेशो द्रव्यं द्रव्याणि वा । एवं द्व्यादयो यावदनन्ताः एकजीवप्रदेशाः कति कर्मपलिच्छेदैर्वेष्टित इति दण्डके यस्य ज्ञानावरणीयमस्ति । तस्य दर्शनावरणीयादि कर्माणि सन्ति न सन्ति वा एवं संवेधः सर्वकर्मणां जीवः पुद्गलः पुद्गली वा एवं दण्डके अष्टमं शतं समाप्तमिति ।

१ जम्बूद्वीपः किं संस्थानः तत्र कति नद्यः ।

२ जम्बूद्वीपे कति चन्द्रा सूर्यास्ताराश्च ।

३० अं तरद्वीपविचारः कोपि केवल्यादेः सकाशाद्धर्मं श्रुत्वा बोधिं लभते । कोपि स्वयं लभते–

३१ यः स्वयं लभते तस्य संयमो ब्रह्मचर्यं मत्यादिज्ञानं केवलज्ञानं च स्यान्न स्याद्वा । यस्य सर्वज्ञानावरणीयक्षयः स धर्मं लब्ध्वा षष्ठादितपसा विभङ्गज्ञानं लभते । पश्चात् शुद्धलेश्याभिश्चारित्रं प्रतिपद्यते । ततो विभङ्गोऽवधिः स्यात् । तस्य लेश्याः ज्ञानानि योगाः । उपयोगः संहननं संस्थानं । उच्चत्वं । आयुः वेदाः कषायाः अध्यवसायाश्च के कीदृशाः स्युः । स केवलज्ञाने सत्यपि धर्मोपदेष्टी न हि स ऊर्द्ध्वादि क्षेत्रे क्व । सोऽन्यस्य प्रव्राजको न एवं केवल्यादेः श्रुत्वा यो धर्मप्रतिपत्ता तस्यावधिज्ञानं स्यात् । तस्य पूर्ववत् लेश्यादिप्रश्नः ।

३२ श्री पार्श्वशिष्य गाङ्गेयप्रश्नाः । सान्तरं निरन्तरं वा नारकादय उत्पद्यन्ते विपद्यन्ते वा कतिविधं प्रवेशनं । द्वौ नारकौ तुल्यौ भवतः तदा तौ एकस्यां पृथ्व्यां अथवा एकः पृथ्व्यां प्रथमायां एको द्वितीयस्यां तृतीयादिषु वा । एवं त्रयादयो यावत्सङ्ख्येया असङ्ख्येयाश्च तदल्पबहुत्वम् । एवं तिर्यग्प्रवेशेपि द्व्यादिभङ्गाः । मनुष्यदेवप्रवेशयोरपि तथैव भङ्गा अल्पबहुत्वं च । सन्तो नारकादय उत्पद्यन्ते च्यवन्तेऽसन्तो वा । स्वयं अस्वयं वा । गाङ्गेयस्य पञ्चमहाव्रतस्वीकारः । ऋषभदत्तदेवानन्दा प्रतालापकः—

३३ ग्रन्थाग्रं ६००० जमालि सम्बन्धः । नरो नरं घ्नन् एकं हन्ति नैकात्वा । एवं अश्वं हस्त्यादिकं त्रसं घ्नन् ऋषिं घ्नन् अनन्तजीवान् हन्ति । पृथ्वीकायादिः । पृथ्वीकायादिकमेवोच्छ्वसिति । निःश्वसिति च ।

नवमं शतं समाप्तम् ।

१ का प्राच्यादि दिक् । जीवाः अजीवा १० दिशः । दिशां नामानि दिक्षु जीवाजीवदेशा । जीवप्रदेशाश्च । अजीवा अजीवदेशादयोप्येवरूपिणोऽरूपिणो वा जीवाऽजीवाः ।

२ शरीराणि । संवृतस्य साधोर्वा विमार्गेस्थितस्याग्रतः पृष्ठतो रूपाणि पश्यतः साम्परायिकी क्रिया । यथासूत्रं गच्छत ईर्यापथिकी । कतिविधा योनिः॥ कतिविधा वेदना । नारकाणां सुखा १ दुःखा २ अदुःखाऽसुखा च वेदना भिक्षुप्रतिमाः । साधुरकृत्यसेवी कथमाराधकः ।

३ देवो देवावासमध्ये निजर्द्ध्या याति परर्द्ध्या वा । महर्द्धिकोल्पर्द्धिकदेवावासमध्ये याति विमोह्य । एवं देव्यावासेपि । हयस्य खुक्खुत्ति शब्दः किं प्रज्ञापनीभाषाका । सामहत्थी साधुप्रश्नाः । त्रायस्त्रिंशद्देवाः पूर्वभवे श्राद्धास्ते पार्श्वस्थाः कुशीलादयोपि ।

५ चमरादीन्द्राणां वैमानिकेन्द्राणां च त्रायस्त्रिंशदेव पूर्वभवाः । चमरस्य कति अग्रमहिष्यः । एकैका कतिरूपाणि

विकुर्वति । जिनदंष्ट्रासमुद्गकस्थामे देवा भोगं न कुर्वन्ति । सोमयमादीनां कति अग्रमहिष्यः । का ऋद्धिः । एवं बलिधरणादीन्द्राणां या ऋद्धिः लोकपालानां च पिशाचेन्द्राणामग्रमहिष्यो राजधान्यः । एवं चन्द्र-सूर्य-भौमादि-ग्रहाणां राजधान्यावासा ऋद्धिरग्रमहिष्यश्च । शक्रेशानयोर्देव्यः विकुर्वणा च । शक्रस्य च क्व राजधानी कियत्प्रमाणो । किमायुः ऋद्धिश्च ।

६ अन्तरद्वीपानामौत्तराणां स्वरूपं २८ उद्देशकाः । दशमं शतं समाप्तम् ॥

१ उत्पलमेकजीवमनेकजीवं वा । ते जीवाः कुतो गतेरुत्पद्यन्ते । एकस्मिन् समये कियंतश्च । का सङ्ख्या तेषां । किं महान्ति शरीराणि । ते जीवा ज्ञानावरणीयादिकर्मणां बन्धका अबन्धका वा । आयुषि एकोवाऽनेके । एवं कर्मवेदनोदीरणोदयाः लेश्यादर्शनज्ञानउपयोगशरीरवर्णादि । उच्छ्वासश्वासआहारकविरतिक्रिया सप्ताष्टकर्म संज्ञा । इन्द्रिय-अन्तरकाल-अन्तरभव इत्यादिद्वारैरुत्पलजीवविचारः तस्यायुः । समुद्घाताः । समुद्घातं कृत्वा म्रियन्तेऽन्यथा वा । सर्वे जीवा उत्पलतयोत्पन्ना न वेति ।

२ एवं सालुंक । पलास । कुंभिआनलिणी । पउमकण्णिआ । नलिनोद्देशकास्सप्त ज्ञेयाः ।

९ शिवराजर्षिसम्बन्धः । तेन द्वीपसमुद्राः सप्त प्ररूपिताः स्वामिनाऽसङ्ख्याता उक्ताः ग्रं० १००० शिवस्य

संयमान्मुक्तिः । मुक्तौ कस्मिन् संहनने संस्थाने आयुषि च याति । कतिविधो लोकः ।

१० उर्द्ध्वाधस्तिर्यग्लोकाः कतिविधाः । अलोकः किंसंस्थानः लोके जीवा जीवदेशादयः अजीवा अजीवदेशादयश्च । अरूपिणः सप्त । द्रव्यक्षेत्रादि लोकः लोकप्रौढत्वे षड् देवाः मेरुचूलिकास्थिताः बलिपिण्डान् दिक्षु क्षिपन्ति । पृष्टौ गत्वा तान् ग्रहीतुं बहुकालेनापि शक्नुवन्तीति दृष्टान्तः । अलोकप्रौढत्वे अष्टौ दिक्कुमार्यो मानुषाद्रौस्थित्वाऽष्टौ बलिपिण्डान् क्षिपन्ति । दश देवास्तान्पिण्डान् बहुकालेनापि अलोकान्तं गत्वा न शक्नुवन्ति गृहीतुमिति दृष्टान्तः । एकस्मिन् आकाशप्रदेशे एकेन्द्रियादिप्रदेशाः कति अन्योन्यं मिलिताः । तत्र नर्त्तकीदृष्टान्तः ।

११ वाणिजग्रामे सुदर्शनश्रेष्ठिप्रश्नाः । चतुर्विधःकालः पल्योपमादिलक्षणः सुदर्शनः पूर्वभवे महाबलनृपस्तस्य सम्बन्धः सविस्तरः । अट्ठहिरण्णकोडीउ इत्यादिर्महाबलदायः । आलभिकायां इसिभद्राविश्राद्धप्रश्नाः । देवानां कियदायुः । पुद्गलपरिव्राजकप्रतिबोधः । एकादशं शतं समाप्तम् ॥

१ शङ्खपुक्खली श्राद्धसम्बन्धः तत्र पौषधं । त्रिविधा त्रिविधा जागरिका । क्रोधादिवशाज्जीवः किं बध्नाति ।

२ कोशाम्ब्यामुदयनो राजा । तस्य माता मृगावती । पितृष्वसा जयन्ती । तस्याः प्रश्नाः । जीवानां गुरुत्वं कथं।भवसिद्धिकमुक्तौ तद्रहितो लोको न स्यात्तत्र दृष्टान्तः । सुप्तता जागरिका वा श्रेयसी । सबलता दुर्बलता वा

वैयावृत्यं दशधा इन्द्रियवशाज्जीवः किं बध्नाति ।

३ कति पृथिव्यस्तदल्पबहुत्वम् ।

४ परमाणुद्वयेन द्विपदेशिकः स्कन्धः स कति शकलानि स्यात् एवं त्रिप्रदेशिकादयोपि यावदनन्तप्रदेशः स्कन्धः । सप्तविधः पुद्गलपरावर्त्तः । नारकादीनां ते कति अतीता ।

५ अनागता वा । तत्स्वरूपं, तदल्पबहुत्वम् । प्राणातिपातादीनां क्रोधादीनां वर्णगन्धादयः कति । अवग्रहेहादीनां कति वर्णादयः । घनवातादीनां च नारकादीनां च मतिज्ञानादीनां च वर्णगन्धादयः ।

६ राहुश्चन्द्रं गृह्णातीतं परेषां वचः तत्रोत्तरं राहुद्वयं च । ग्रं० ८००० ।

७ कतिकालेन ग्रहणं चन्द्रसूर्ययोः । चन्द्रस्य शशिनामार्थः । चन्द्राग्रमहिष्यः । देवानां कीदृक्कामसुखं । तत्र तरुण नरदृष्टान्तः । लोकप्रौढत्वं जीवेन सर्वलोकः स्पृष्टः । तत्राजावाटकदृष्टान्तः । सर्वे जीवा नारकादिस्थानेषु

८ पृथ्वीकायिकादिरूपेण उत्पन्नपूर्वाः सर्वे मातृपितृभ्रात्रादिरूपेण । देवाश्च्युत्वा द्विशरीरेषु सर्वेषु उत्पद्यन्ते ।

९ व्याघ्रादयो नरकगामिनः । देवाः पञ्चविधाः--द्रव्यदेवा ।१। नरदेवा २ धर्मदेवा ३ देवाधिदेवा ४ भावदेवाः ५ एतेषां गत्यागती । अन्तरमल्पबहुत्वं च ।

१० आत्माष्टधा । द्रव्यात्मादिः । कषायात्मादिः कस्य कः । अल्पबहुत्वम् च । तेषां आत्मैव ज्ञानं । ज्ञानमेवात्मा वा । रत्नप्रभात्मानात्मा वा । एवं सिद्धिशिलान्तं प्रश्नः । अणुरात्माऽनात्मा वा । एवं द्विप्रदेशिकस्कन्धादयः तत्र सप्तभङ्गी । द्वादशं शतं समाप्तम् ।

१ नरकावासविस्तारः । नरके कति नारकाः किं लेश्याः, कति कृष्णपाक्षिकाः कति शुक्लपाक्षिकाः उत्पद्यन्ते । एवं संज्ञि असंज्ञि भवसिद्धिकमतिश्रुतावधिज्ञानिमतिश्रुताज्ञानविभङ्गज्ञानि । स्त्रीनरक्लीबवेदादयः कति उत्पद्यन्ते । एवं सप्तपृथ्वीषु नारकाः सम्यग्दृशो मिथ्यादृशो वा । एवं असुरकुमारादि ।

२ देवेषु नारकवत् प्रश्नः अनुत्तरसुरा यावत् ।

३ नारकाअनन्तराहारा निवर्त्तता । परिचारणा च ।

४ षष्ठपृथ्वीनारकेभ्यः सप्तमपृथ्वीषु तासां स्पर्शः कीदृशः । ऊर्द्ध्वादिलोकायाममध्यं । प्राच्यादिदिशां आग्नेय्यादि विदिशां च आदिः विस्तारः प्रदेशाश्च । पञ्चास्तिकायप्रदेशः कतिभिर्धर्मास्तिकायादिप्रदेशैःस्पृष्टः एवं सर्वास्तिकायाः लोकेऽनन्तः कथं मान्ति । तत्र प्रदीपप्रभादृष्टान्तः । किंसंस्थितो लोकः । ऊर्द्ध्वादिलोकाल्पबहुत्वम् ।

५ नारकाः सचित्ताहारा वा । नारकाः सान्तरं निरन्तरमुत्पद्यन्ते । च्यवन्ते

६ चमरराजधानी स्वरूपं । वीतभये पुरे उदायनो राजा । अभीचिः पुत्रः केसी भागिनेयः तेषां सम्बन्धः । नरकेऽसुरावासाः क्व ।

७ आत्मा भाषाऽन्या वा । रूपिणी साऽरूपिणो वा सचित्ता वा जीवाऽजीवा वा ।

८ जोवानामजीवानां वा । सत्यामृषादिभाषा एवं मनःकायोपि । आवीच्यादि मरणं । पञ्चधा कर्मणां बन्धस्थित्यादि ।

९ साधुः रज्जुघण्टी गृहीत्वाऽऽकाशे उत्पतति सुवर्णादि पेटां च । साधुर्हंसवत्क्षीरात्क्षीरं याति । एवं रूपाणि कुरुते । चक्रधारी । छत्रधारी । पद्मधारी । सहस्रपत्रादिसाधुः ।

१० कति समुद्घाताः । त्रयोदशं शतं समाप्तम् ।

१ साधुश्चरमं देवा वासमतिक्रान्तः । परमंदेवावासमप्राप्तः । कालं कुर्यात्तदा क्वोत्पत्तिः । नारकाणां कीदृशी शीघ्रा गतिः । तत्र बाह्वाकुञ्चनप्रसारणादि दृष्टान्तः । एकेन्द्रियाणां चतुः समयाविग्रहगतिः । अनन्तरपरम्परनिर्गताः । ते किमायुर्बध्नन्ति ।

२ कतिविध उन्मादः । नारकादिदण्डके उन्मादः । मेघो वर्षति काले । इन्द्रो वृष्टिं करोति कथं क्व । ईशानेन्द्रास्तमस्कायं

३ कुर्वन्ति । देवः साधुमध्ये याति न याति वा । नारकाणां मिथोस्ति विनयो न वा । असुरादीनामपि अल्पर्धिको देवो महर्द्धिकमध्ये याति ? । नारकाणां कीदृशः पुद्गलपरिणामः ।

४ पुद्गलोऽतीतमनन्तं कालं अनागतं वा रूक्षः स्निग्धो वा चरमोऽचरमो वा द्विधा परिणामः ।

५ नारकोसिमध्ये याति न वा । एवं दण्डके नारकदशस्थानान्यनुभवन्ति । एवं देवादयः । देवो बाह्य पुद्गलाननादाय भित्याद्युल्लङ्घने समर्थो न वा ।

६ नारकाकिमाहाराः । किंपरिणामाः किंयोनयः एवं दण्डकेपि ( ग्रं० ९००० ) शक्रःकथं भोगान् भुङ्क्ते । किं स्थानं विकुर्वति । एवमपरेन्द्राणामपि ।

७ चिरसंसिद्धोसिमे गोअमा इत्यादि । अनुत्तरसुरा अप्पेपि अप्पेतमर्थं जानन्ति । षड्विधं तुल्यत्वं । अनशनी आहारं गृह्णाति लेवसप्तमार्थः । अनुत्तरशब्दार्थः, अनुत्तरसुराणां कियत्तपः । क्षेप्यं कर्म ।

८ रत्नप्रभाशर्कराप्रभयोः किमन्तरं । एवं सर्वासां, स्वर्गाणामपि, एष सालतरुर्मृत्वा क्व यास्यति । पाटलतरुरपि । अम्बडसम्बन्धः संक्षिप्तः । अव्याबाधा देवा इति कोर्थः । पुरुषाक्षिपत्रेसुरो नाट्यं करोति । पुरुषस्य शिरश्छित्वा पुनर्योजयति । जृम्भका देवा इति कोऽर्थः । तेषां क्व स्थानं ।

९ साधुः स्वलेश्यां जानाति । सकर्मलेश्याः पुद्गला अवभासन्ते । नारकाणां आत्ताअनात्ता वा पुद्गलाः ।

एवं इष्टादिदेवानां रूपसहस्रे भाषासहस्रं । सूर्यच्छायाशब्दयोरर्थः । कतिवर्षपर्यायः साधु कस्य देवस्य लेश्यामतिव्रजति ।

१० केवली छद्मस्थादि वेत्ति भाषते च तथा सिद्धप्रश्नः । केवली रत्नप्रभादि । केवली परमाणुं द्विप्रदेशादि-स्कन्धं च वेति सिद्धोपि । चतुर्दशं शतं समाप्तम् ।

११ गोशालकसम्बन्धः । उत्पत्तिविपत्ती । तस्य भवाः, सुमङ्गलसाधुसम्बन्धः । तस्य सर्वार्थसिद्धोत्पत्तिः । ग्रं० १०००० पञ्चदशं शतं समाप्तम् ।

१ अधिकरणीवायुः स्व० अग्न्यायुः । अयोव्यापारान्तरः कतिक्रियः । अधिकरणी संडासकादीनां क्रियाः । जीवा अधिकरणी । अधिकरणंवा । एव दण्डके । जीवः शरीराणि । मनोयोगादि निर्वर्त्तयन्नतिकरणो । अधिकरणं वा ।

२ जीवानां जरा शोको वा । एवं दण्डके देवेन्द्रादिः पञ्चविधोऽवग्रहः । शक्रः सम्यग्वादी मिथ्यावादी वा, सत्यां भाषां भाषते असत्यां वा । सावद्यं भाषते ऽनवद्यं वा । हस्तादि मुखमावृत्य जल्पतोऽनवद्या भाषा । चैतन्य-कृतानि कर्माण्यचेतनकृतानि वा ।

३ कति कर्मप्रकृतयः कति बध्नाति । साधोरर्शांसि भवन्ति । तानि वैद्यः छिनत्ति । तस्य क्रिया ।

४ साधोश्चतुर्थीदितपसा या निर्जरा सा नारकिणः केन कालेन । तत्र काष्ठग्रन्थिदृष्टान्तः ।

५ गङ्गदत्तदेवप्रश्नः । परिणमन्तः पुद्गलाः परिणता अपरिणमन्तो वा । इन्द्रप्रश्नः । गङ्गदत्तदेवपूर्वभवः ।

६ पञ्चविधः स्वप्नः । जीवाः सुप्ता जागरा वा संवृता वा स्वप्नं पश्यन्ति । कति स्वप्नाः । अर्हदादिमातरः कति स्वप्नान् पश्यन्ति । श्रीवीरः छद्मस्थे १० दर्शी । तत्फलं । येन स्वप्नेन तद्भवे मुक्तिः स्यात् ।

७ कत्युपयोगाः । पूर्वादिचरमांतेषु जीवास्तद्देशास्तत्प्रदेशो वा । एकसमयेन परमाणुर्लोकपूर्वान्तात्पश्चिमान्तं याति । वर्षं वर्षति न वेति करं प्रसार्य विलोकयन् कतिक्रियः । देवोऽलोके याति न वा ।

८ बलीन्द्र राजधानीमनीदि ।

९ कतिविधोऽवधिः ।

१० द्वीपकुमारादीनामाहारोच्छ्वासादिः । एवमुदधिकुमारादीनां चतुरुद्देशकाः । षोडशं शतं समाप्तम् ॥

१४ उदायिहस्ती भूतानन्दहस्ती च कुत उत्पन्नो मृत्वा च क्व याता । नरस्तालवृक्षमारुह्य फलं पातयन् कतिविधः ।

१ फलं तरुर्वा कतिक्रियः । जीवः शरीरं इन्द्रियं योगं वा निर्वर्त्तयन् कतिक्रियः । षड् भावाः ॥

एवं इशादिदेवानां रूपसहस्रे भाषासहस्रं । सूर्यच्छायाशब्दयोरर्थः । कतिवर्षपर्यायः साधु कस्य देवस्य लेश्यामतिव्रजति ।

१० केवली छद्मस्थादि वेत्ति भाषते च तथा सिद्धप्रश्नः । केवली रत्नप्रभादि । केवली परमाणुं द्विप्रदेशादि-स्कन्धं च वेति सिद्धोपि । चतुर्दशं शतं समाप्तम् ।

११ गोशालकसम्बन्धः । उत्पत्तिविपत्ती । तस्य भवाः, सुमङ्गलसाधुसम्बन्धः । तस्य सर्वार्थसिद्धोत्पत्तिः । ग्रं० १०००० पञ्चदशं शतं समाप्तम् ।

१ अधिकरणीवायुः स्व० अग्न्यायुः । अयोव्यापारान्नरः कतिक्रियः । अधिकरणी संडासकादीनां क्रियाः । जीवा अधिकरणी । अधिकरणंवा । एव दण्डके । जीवः शरीराणि । मनोयोगादि निर्वर्त्तयन्नतिकरणी । अधिकरणं वा ।

२ जीवानां जरा शोको वा । एवं दण्डके देवेन्द्रादिः पञ्चविधोऽवग्रहः । शक्रः सम्यग्वादी मिथ्यावादी वा, सत्यां भाषां भाषते असत्यां वा । सावद्यं भाषते ऽनवद्यं वा । हस्तादि मुखमावृत्य जल्पतोऽनवद्या भाषा । चैतन्य-कृतानि कर्माण्यचेतनकृतानि वा ।

३ कति कर्मप्रकृतयः कति बध्नाति । साधोरर्शांसि भवन्ति । तानि वैद्यः छिनत्ति । तस्य क्रिया ।

४ साधोश्चतुर्थादितपसा या निर्जरा सा नारकिणः केन कालेन । तत्र काष्ठग्रन्थिदृष्टान्तः ।

५ गङ्गदत्तदेवप्रश्नः । परिणमन्तः पुद्गलाः परिणता अपरिणमन्तो वा । इन्द्रप्रश्नः । गङ्गदत्तदेवपूर्वभवः ।

६ पञ्चविधः स्वप्नः । जीवाः सुप्ता जागरा वा संवृता वा स्वप्नं पश्यन्ति । कति स्वप्नाः । अर्हदादिमातरः कति स्वप्नान् पश्यन्ति । श्रीवीरः छद्मस्थे १० दर्शी । तत्फलं । येन स्वप्नेन तद्भवे मुक्तिः स्यात् ।

७ कत्युपयोगाः । पूर्वादिचरमांतेषु जीवास्तद्देशास्तत्प्रदेशो वा । एकसमयेन परमाणुर्लोकपूर्वान्तात्पश्चिमान्तं याति । वर्षं वर्षति न वेति करं प्रसार्य विलोकयन् कतिक्रियः । देवोऽलोके याति न वा ।

८ बलीन्द्र राजधानोमनीदि ।

९ कतिविधोऽवधिः ।

१० द्वीपकुमारादीनामाहारोच्छ्वासादिः । एवमुदधिकुमारादीनां चतुर्दशकाः । षोडशं शतं समाप्तम् ॥

१४ उदायिहस्ती भूतानन्दहस्ती च कुत उत्पन्नो मृत्वा च क्व याता । नरस्तालवृक्षमारुह्य फलं पातयन् कतिविधः ।

१ फलं तरुर्वा कतिक्रियः । जीवः शरीरं इन्द्रियं योगं वा निर्वर्त्तयन् कतिक्रियः । षड् भावाः ॥

२ संयतो धर्मस्थः असंयतोऽधर्मस्थः जीवा धर्म्मे स्थिता अधर्मे वा। एवं दण्डके। जीवा बालाः पण्डिता वा। एकजीवहिंसानिवृत्तोपि न बालः अन्यो जीवोन्यश्च जीवात्मेति परवाक्यं। देवः पूर्वरूपी पश्चादरूपी स्यान्नवा।

३ शैलेशी प्रतिपन्नए जनेन वा कतिविधाए जनाचलना च। संवेगी। निर्वेदा२दि ६३ वचनानां फलानि।

४ प्राणातिपातमृषावादादिभिः क्रिया सा स्पृष्टाऽस्पृष्टा वा। जीवानामात्मकृतं दुःखं परकृतं वा। ईशानेन्द्रसभा।

५ पृथ्वीकायादिः समुद्घातान्मृत्वोत्पद्यते। उत्पद्य म्रियते वा।

६ एवं स्वर्गादावुत्पादः।

७ स्वर्गान्नरकोत्पादः॥ एवमप्कायाद्युद्देशकाः। नागकुमारादयः समाहारोच्छ्वासा इत्यादि। सप्तदशं शतं समाप्तम्॥

१ जीवो जीव भावेन प्रथमोऽप्रथमो वा। एवं सिद्धत्वादिना। एवं चरमोऽचरमो वा।

२ कार्तिकश्रेष्ठिसम्बन्धः॥

३ ३ मार्गंदिअपुत्रप्रश्नाः। कापोतलेश्यः पृथ्वीकायिको मृत्वा नरो भूत्वा सिद्ध्यति। एवमप्कायादिरपि। साधोः कर्मनिर्जरापुद्गलैर्लोको व्याप्तः। द्विविधो बन्धो। नारकादीनां जीवानां कर्मबन्धे नानात्वमेकत्वं वा। तत्र धनुर्बाणदृष्टान्तः। नारका यान् पुद्गलानाहारतया गृह्णन्ति तान् सर्वान् स्वल्पान् वा।

४ जीवा अजीवाश्च जीवानां परिभोगतया यान्ति । कमेडजु मतेओ अबावर जुमकलिओय ४ विचारो दण्डके ।

५ द्वौ असुरकुमारौ । एको रम्यः परो निन्द्यः । एवं देवाः सर्वे नराश्च । नारकादि रत्रेतन भवायुर्व । किं वेदयते । मिथ्यादृग् देवोभिमन्त न विकुर्वति सन्यग्दृष्टिर्विकुर्वति ॥

६ फणितगुडः कतिवर्ण्णः कतिगन्धः कतिरसः कतिस्पर्शः । एवं भ्रमरशुकपिच्छशुंठयादयोपि । केवली भाषाद्वयं भाषते । कतिविध उपधिः परिग्रहश्च । एवं दण्डके ग्रं० ११००० । कतिविधं प्रणिधानं मड्डुकश्राद्धसम्बन्धः अश्रुताज्ञात--प्ररूपणे दोषः । देवः स्वयं स्वं विकुर्वतिरूपैर्यध्यति । तेषु रूपेषु एको जीवः देवासुराणां संग्रामः कैः प्रहरणैः । देवाः कति द्वीपसमुद्रान् प्रदक्षिणयन्ति । देवानां कर्म्मांशाः केन कालेन क्षिप्यन्तें ।

८ साधुरीर्याचरन् कुर्कुटपोतं वर्त्तकपोतं वा जीवं व्यापादयेत्तस्य का क्रिया । परतीर्थिकवाक्यं गौतमं प्रति यूयं बाला इत्यादि । छद्मस्थः परमाणुं वेत्ति । परमावधिको वा । यस्मिन् काले वेत्ति तस्मिन् पश्यति न वा ।

९ द्रव्यनारकाः द्रव्यपृथ्वीकायिकादयः द्रव्यदेवाः तेषां स्थितिः ।

१० साधुः खड्गधारायां प्रविशन् न छिद्यते । एवं परमाणुरपि । अणुर्वायुना स्पृष्टः किं वा वायुरणुना । दृतिर्वायुना । वायुर्दृतिना । रत्नप्रभाया अधो द्रव्याणि सन्ति । एवं सप्तसु । वाणिजग्रामे सोमिलब्राह्मणप्रश्नाः । जत्ता । जवणिज्जं ।

अव्वाबाहं फासुविहारं एतेषामर्थः । सर्षपा माषाः कुलत्थाश्च भक्ष्या अभक्ष्या वा । अष्टादशं शतं समाप्तम् ॥

१ कति लेश्याः ।

२ कति लेश्याश्च ।

३ चत्वारि पञ्च वा शरीराणि साधारणानि पृथ्वीकायादीनां स्युर्नवा । तेषां लेश्यादृष्टिज्ञानयोगोपयोगाहार-संज्ञा । गत्यागति । स्थिति । समुद्घाताः के कियन्तः स्युः । तेषामवगाहाल्पबहुत्वं तेषां । के कस्मात् सूक्ष्माः के बादराः कियती शरीरावगाहना । चक्रिस्त्री शिलायां पृथ्वीकायं पिनष्टि । तथापि न तेषामचित्तता । पृथ्वीकायस्य कीदृशी वेदना सङ्घट्टादौ । एवं सर्वेषां ॥

४ नारका महाश्रवा महानिर्जरा महाक्रिया महावेदनाः अल्पा अल्पनिर्जरा अल्पक्रिया अल्पवेदना वा । भङ्गा अनेके । एवं दण्डके ॥

५ चरमा नारकाः परमा वा । तेषां के बहुकर्म्माणः । केऽल्पकर्माणः द्विधा वेदना निदा अनिदा वा ।

६।७ कति द्वीपसमुद्राः किंसंस्थानाः । असुरावासाः कियन्तः एवं सर्वदेवावासा ।

८ जीवनिर्वृत्तिरेकेन्द्रियादिः पञ्चधा । एवं जीवभेदाः । कर्मनिर्वृत्तिः । शरीरनिर्वृत्तिः । कतिविधा भाषा । मनःकषायवर्णगन्धादि । संस्थानसंज्ञालेश्यादृष्टिज्ञानाज्ञानयोगोपयोगाणां निर्वृत्तिः कतिविधा ।

९ पञ्चविधं करणं । शरीरेन्द्रियभाषा । कषायानि ।
१० व्यन्तराः सर्वे समाहाराः ॥ एकोनविंशं शतं समासम् ।

१ द्वीन्द्रियादयश्चत्वारि पञ्च वा शरीराणि साधारणानि कुर्वन्ति न वा । तेषां लेश्यादृष्टिज्ञानादीनि । स्थितिगत्यागतयश्च ।
२ आकाशो द्विविधः । धर्मास्तिकायादयो लोके । धर्मास्तिकायादीनां पर्यायनामानि ।
३ प्राणातिपातादि १८ पापस्थान तद्विरमणबुद्धिचतुष्कम् । अवग्रहेहादि । नारकत्वादि ज्ञानावरणादि । मति-ज्ञानादयः सर्वे जीवपर्यायाः । कतिविध इन्द्रियोपचयः ।
४।५ परमाणुः । कतिवर्णादिः । एवं द्विप्रदेशादिस्कन्धाः अनन्तप्रदेशिका अपि वर्ण्णगन्धादीनां बहुभङ्गाः । परमाणुश्चतुर्विधः ।
६ रत्नप्रभायाः पृथ्वीकायः समुद्घातं गतः सौधर्मादौ उत्पद्यते । उत्पद्याहारयति । आहार्य उत्पद्यते वा । एवमप्कायादिरपि ।
७ कतिविधो बन्धः । जीवप्रयोगबन्धादि । अनन्तरपरम्परबन्धः परस्परबन्धो नारकादीनां कर्मणां वेदानां

शरीराणां ज्ञानानां च कतिविधो बन्धः ।

८ कति कर्मभूमयः कति अकर्मभूमयः । तासु कति तीर्थकृतः कति व्रतान्युपदिशन्ति । ऋषभादिजिननामानि तेषामन्तराले १४ पूर्वविच्छेदः कदा । वीरतीर्थं कियत्कालं । तीर्थङ्करस्तीर्थं अन्यो वा । प्रवचनं वा । किं उग्राभोगाः ××× सिद्धयन्ति ।

९ विद्याजङ्घा२ चारणविचार चैत्यवन्दनं ।

१० जीवाः सोपक्रमायुषो निरुपक्रमायुषो वा एवं नारकादयः । नारकादयः स्व १ पर २ तदुभयो ३ प्रक्रमादुत्पद्यन्ते च्यवन्ते वा । नारकादयः षट्कसमर्जिता । नोषट्कसमर्जिता वा । एवं द्वादश चतुरशीति समर्जितास्तेषामल्पबहुत्वं । (ग्रं० १२०००) विंशं शतं समाप्तम् ।

१।२ शालिगोधूमव्रीहीणां मूलजीवाः कुत उत्पद्यन्ते । कति च किं महत्वं किमायुः ।

३ शालिव्रीह्यादियवजवान्तानां स्कन्धकन्दजीवप्रश्नाः ।

४ एवं त्वचोपि ॥ शाल १ प्रवाल २ पत्र ३ पुष्पोद्देशका । एवं दश । कलमस्वरादीनां द्वितीयो वर्गः ॥ अतसी कुसुम्भादीनां तृतीयः ।

वंशवेण्वादीनां चतुर्थः ॥ ईक्षु १ सेटिका २ अज्ञरुह २ तुलसी ४ प्रमुखाणां । एवमष्टवर्गाः ।
एकविंशं शतं समाप्तम् ।
तालादि १ निम्बादि २ अस्तिकादि ३ वातिहणि ४ सरिअ ५ पुसफलिकाद्दीनां षड् वर्गाः ॥
द्वाविंशं शतं समाप्तम् ॥
आलु प्रभृति १ लोही २ आयकाय ३ पाठा ४ मांषपणी ५ प्रमुखाणां पञ्चवर्गाः ।
त्रयोविंशं शतं समाप्तम् ।
नेरइआ १ असुराई १० । पुढवाई ५ बिंदिआदओ ३ तइय । पंचिंदिय तिरिअ नरा २ वंतर १ जोइसिय १ वेमाणी । १।१ एते जीव दण्डकाश्चतुर्विंशतिः । उववाय १ परीमाणं २ सङ्घयणु ३ चत्त ४ मेत्र संठाणं । ५ लेसा ६ दिट्ठी ७ णाणे ८ अण्णाणे ९ जोंग १० उवओगे ११ । सण्णा १२ कसाय १३ इंदिअ १३ समुग्घाया १५ वेदणाय १६ वेदेअ १७ आउं १८ अज्झवसाणा १९ अणुबन्धो २० कायसंवेहो २१ । एतान्येकविंशतिद्वारैः प्रश्नाः ( ग्रं० १३००० ) ।
एवं चतुर्विंशति जीवदण्डकेषुचतुर्विंशति- रुद्देशकाः । चतुर्विंशशतं समाप्तम् ।
१ कतिलेश्याः । १४ भेदा जीवानां । तेषां योगाल्पबहुत्वं दण्डके । १५ भेदैर्योगाः । तदल्पबहुत्वं ॥

२ जीवाजीवद्रव्यद्वयं । जीवा अजीवाश्च कति । एकस्मिन्नाकाशप्रदेशे कति दिग्पुद्गलाः । शरीरतया जीवः कानि द्रव्याणि गृह्णाति ।

३ कति संस्थानानि तद्भेदाः । तदल्पबहुत्वं । कस्मिन् अजीवसंस्थाने जघन्योत्कृष्टाभ्यां कति प्रदेशाः । श्रेणि-प्रतरघनभेदाः प्रदेशाश्च ।

४ कति युग्माः एवं दण्डके जुम्मविचारो बहुः । परमाणवः कतिप्रदेशावगाढाः । स्कन्धाः कति । एकगुण-कालादीनामल्पबहुत्वं । एवं स्पर्शादि । एकसमयस्थितिकाः कतिकडजुमतिओय । दावर । कलिउगवि-परमाणुश्चलोवला कियत्कालं । धर्माधर्मास्तिकाययोराकाशजीवयोश्च मध्यप्रदेशाः कति ।

५ कति पर्यायाः ।

६ आवलिकादिषु समयाः कियन्तः । सागरोपमादौ कियन्ति पल्योपमानि । निगोदा द्विविधा । पुलाकबकुश कुशीलनिर्ग्रन्थस्नातकानां बहुद्वारैः । ( ग्रं० १४००० ) विचारः सविस्तरः ।

७ सामायिकछेदोपस्थापनपरिहारविशुद्धसूक्ष्मसम्परायथाख्यातानां बहुविचारो बहुद्वारैः । दशविधा प्रति-सेवना । दश आलोचनादोषाः दशस्थानैरालोचयत्यात्मदोषं प्रायश्चित्तार्हश्च । दशधा सामाचारी । दशधा प्रायश्चित्तं । द्वादशधा तपोविचारविस्तरः ।

८ नरकाद्युत्पत्तौ प्लवदृष्टान्तः । जीवगतौ दृष्टान्तः । जीवाः परभवायुः कथं कुर्वन्ति । आत्मद्धर्या परद्धर्या वा ।
१२ भवसिद्धिक । अभवसिद्धिक । सम्यग्दृष्टि । मिथ्यादृष्टि । नारकादि प्रश्नोद्देशकाश्चत्वारः । पञ्चविंशं शतं समाप्तम् ।
१ जीवाः पापकर्म बद्धवन्तो । बध्नन्ति । भन्त्स्यन्ति । दण्डके बहुद्वारैर्विचारः ।
२ अनन्तरोपपन्नाः परम्परोपपन्नाः । अनन्तरावगाढाः परम्परावगाय़ः । अनन्तराहाराः ।
११ परम्पराहाराः । अनन्तरपर्याप्ताः । परम्परपर्याप्ताः । चरमा अचरमाश्च । नारकाः पापकर्म बद्धवन्तः ।
बध्नन्ति भन्त्स्यन्ति । इतिबहुविचारैरेकादशोद्देशाः । षड्विंशं शतं समाप्तम् ।
जीवाः पापकर्म कृतवन्तः । कुर्वन्ति । करिष्यन्ति । एवं शतपूर्वशतवदेकादशोद्देशकाः । सप्तविंशं शतम् ॥
११ जीवाः पापकर्म क्व समर्जयन्तीति । समर्जनपदेन बन्धशतवदेकादशोद्देशकाः ॥ अष्टाविंशं शतम् ॥
जीवा पापं कर्म युगपद्बहवो वेदितुमारब्धवन्तः किं पृथग् वा एवमनन्तरोपपन्नादिद्वारैरेकादशोद्देशकाः ।

एकोनत्रिंशं कर्मप्रस्थापन शतम् ।

१ परमताभिप्रायाः क्रियावादी । अक्रियावादी । अज्ञानवादी । विनयवादी । च । किं नारकायुः करोति ।
तिर्यगाद्यायुर्वा । एवं लेश्यादिद्वारेषु प्रश्नाः ।

२ अनन्तरोपपन्नादीनां बहुद्धारे प्रश्नैरेकादशोद्देशाः । त्रिंशं समवशरणं शतं समाप्तम् ॥ कति क्षुद्रयुग्माः कडजम्म ।
तेओअ दावरकलिओगस्वरूपं । क्षुद्रकृतयुग्मनारकाः कुत उत्पद्यन्ते । कति कथं इत्यादि ।

४ कृष्णलेश्याः । नीललेश्याः । कापोतलेश्या नारकाः । कृतयुग्मरूपाः । कुतः कति कथं चोत्पद्यन्ते ।

५ भवसिद्धिक कृतयुग्मनारकाः कुतः कति कथं वा ।

६ कृष्णलेश्य भवसिद्धिक कृतयुग्मनारकाः कुत उत्पद्यन्ते ।

७ एवं नीललेश्याः ।

८ कापोत लेश्याश्च कुत इत्यादि ।

१२ एवं भवसिद्धिकैरपि नारकैश्चत्वार उद्देशकाः । एवं सम्यग्दृष्टिभिर्नारकैश्चत्वार उद्देशका । मिथ्यादृष्टि नारकैश्चत्वार उद्देशकाः ।

१४ एवं कृष्णपाक्षिकैः ४ ॥ शुक्लपाक्षिकैश्चाष्टाविंशत्युद्देशाः ।

२४ एकत्रिंशंशतं उपपाताख्यं ॥ एवमुद्वर्त्तनाशतमप्यष्टाविंशत्युद्देशकं ज्ञयं । द्वात्रिंशमुद्वर्त्तनाशतं समाप्तम् ।
त्रयस्त्रिंशशतमध्ये द्वादशैकेन्द्रियाः । शतानि ।

१ तत्र प्रथमे कतिविधा एकेन्द्रियाः । तत्प्रभेदाः । तेषां कतिकर्मणां बन्धोदयवेदनाः । एवमनन्तरोपपन्नकाः ।
परम्परापन्नकाः । अनंतरावगाढाः । परम्परावगाढाः । अनन्तराहाराः । परम्पराहाराः । अनन्तरपर्याप्ताः
परम्परपर्याप्ताः । चरमा अचरमा एभिरेकादशोद्देशैः प्रथममेकेन्द्रियशतं समाप्तम् ॥

२ कति कृष्णलेश्या एकेन्द्रियाः । तेषां कतिकर्मबन्धोदयवेदनाः । एवमनन्तरोपपन्नादिभिरेकादशोद्देशाः । द्वितीय-
मेकेन्द्रिय शतं समाप्तम् एवं नीललेश्यायाएकादशोद्देशैस्तृतीयं शतम् । कापोतलेश्यायाएकादशोद्देशैश्चतुर्थं शतम् ।

४।५ भवसिद्धिकैन्द्रिय प्रश्ने कतिकर्मबन्धोदय वेदनाः । पञ्चमं शतम् ॥

६ कृष्णलेश्याभवसिद्धिकाः । एवमनन्तरोपपन्नादिभिरेकादशोद्देशैः षष्ठमेकेन्द्रियशतं समाप्तं । ग्रं० १५०००

७ नीललेश्यभवसिद्धिकैकेन्द्रियैः सप्तमं शतम् ॥

८ कापोतलेश्य भवसिद्धिकैकेन्द्रियैरष्टमं शतम् ।

९।१० अभवसिद्धिकैर्नवमं शतम् । कृष्णलेश्याभवसिद्धिकैकेन्द्रियशतं दशमम् ।

११ नीललेश्या भवसिद्धिकैरेकादशं शतम् ।

१२ कापोतलेश्या भवसिद्धिकेन्द्रिय शतं द्वादशम् ॥
द्वादशैकेन्द्रियशतैस्त्रयस्त्रिंशं शतं समाप्तम् ।

१ कत्येकेन्द्रियाः रत्नप्रभायाः पूर्वान्तात् पश्चिमान्तं समवहतः । एकेन्द्रियः कतिसमयविग्रहेणोत्पद्यते सप्तश्रेणयः । पश्चिमायाः पूर्वान्तमुत्पद्यते । तत्रापि श्रेणी विग्रहः । एवं पृथ्वीकायः पृथ्वीकायतया । अप्कायादितया मनुष्यक्षेत्रेउत्पद्यते । उद्धर्वलोकेऽपि एवं लोकान्तादपरलोकान्तमुत्पद्यमान । कति समयविग्रहेण । तेषां कति कर्मबन्ध वेदनाः । सदृशकर्माणो विसदृशकर्माणो ते ॥

२ अनन्तरोपपन्नैकेन्द्रियैर्द्वितीयोद्देशकः ॥

३ एवं परोपपन्नकाः । शेषा अपि अष्टउद्देशका ज्ञेयाः । प्रथममेकेन्द्रियश्रेणीशतं समाप्तम् ॥

११ कृष्णलेश्यैकेन्द्रियैर्द्वितीयं श्रेणीशतम् ।

२ नीललेश्यैस्तृतीयं ॥ कापोतलेश्यैश्चतुर्थं ॥ भवसिद्धिकैः पञ्चमम् । कृष्णलेश्यभवसिद्धिकैः षष्ठम् । नीललेश्यभवसिद्धिकैः कापोतलेश्यभवसिद्धिकैर्नवोद्देशकैश्चत्वारि शतानि । एवं द्वादशैकेन्द्रिय । श्रेणीशतैश्चतुस्त्रिंशं शतम् ।

१ षोडश महायुग्माः । तेषां स्वरूपं ॥

२ प्रथमसमयकृतयुग्मकृतयुग्मैकेन्द्रियाः । कुतः कति वोत्पद्यन्ते ।

३ अप्रथमसमयकृतयुग्मैकेन्द्रियाः । कुतः । चरमसमयकृतयुग्मकृतयुग्मैकेन्द्रियाः कुतः ।

४ अचरमसमयकृतयुग्मैकेन्द्रियाः कृतः ।
५ एवं प्रथमसमयकृतयुग्माकृतयुग्माः ।
६ प्रथमाऽप्रथमसमयकृतयुग्माकृतयुग्माः ।
७ प्रथमचरमसमयकृतयुग्म २ ।
८ प्रथमाचरमकृतयुग्म २ ।
९ अचरमकृतयुग्म ।
१० चरमाचरमकृतयुग्म २ ॥ प्रथममेकेन्द्रियमहायुग्मशतं समाप्तं ॥
११ कृष्णलेश्या शतं द्वितीयं ॥ नीललेश्याशतं तृतीयं । १ कापोतलेश्याशतं चतुर्थं ॥
१२ एवं भवसिद्धिकपदेन चत्वारिशतानि । अभवसिद्धिकपदेन चत्वारि शतानि । द्वादशशतैः पञ्चत्रिंशं शतं समाप्तम् ॥
१ कृतयुग्म २ द्वीन्द्रियाणामेवं प्रथमं शतम् ॥ प्रथमसमयादिकृतयुग्म द्वीन्द्रियाणां द्वादशशतैः षट्त्रिंशं शतम् ॥ कृतयुग्मत्रीन्द्रियाणां सप्तत्रिंशं शतम् ॥ चतुरिन्द्रियाणामष्टत्रिंशं शतम् असंज्ञिपञ्चेन्द्रियाणामेकोनचत्वारिंशं शतम् ॥ संज्ञिपञ्चेन्द्रियाणां शतमेकं। षड्भिर्लेश्याभिः षट् शतानि । भवसिद्धिकशतमेकं । षट्लेश्याभिः ६ अभवसिद्धिकैरप्येवं समएकविंशतिशतैश्चत्वारिंशं शतम् ।

१ कति राशियुग्माः । तेषां स्वरूपं । राशियुग्मकृतयुग्मनारकाः कुतः कति वोत्पद्यन्ते । ते किमात्मयशसा । आत्मायशसा वोत्पद्यन्ते ते सक्रियाः सलेश्याः इत्यादि प्रथमोद्देशकः ॥
२।३ राशियुग्म द्वापरयुत्र्योजा नारकाः । राशियुग्मद्वापरयुग्मनारकाः ।
४।५ राशियुग्मकल्पोज नारकाः । कृष्णलेश्यराशियुग्मकृ..युग्मनारकाः ॥
६।७ कृष्णलेश्यत्र्योजैः । कृष्णलेश्यद्वापर युग्मैः ।
८ कृष्णलेश्यकल्पौजैः ।
९ एवं नीललेश्यैश्चत्वारः १२ ॥ कापोतलेश्यैरपि चत्वारः । तेजोलेश्यराशियुग्म कृतयुग्मा नारकाः । असुरकुमाराणां चत्वार उद्देशकाः ॥ पद्मलेश्यैश्चत्वारः । शुक्ललेश्यै‍त्वारः । भवसिद्धिकराशियुग्मनारकैः । कृष्णलेश्यभवसिद्धिकराशियुग्मकृतयुग्मनारकाः कुतः कतिचोत्पद्यन्ते । एवं नीललेश्यैः ४ । पद्मलेश्यैः ४ एवं भवसिद्धिकपदेनाष्टाविंशत्युद्देशकाः ॥ अभवसिद्धिकपदेनाप्यष्टाविंशत्युद्देशकाः । एवं सम्यग्दृष्टिपदेनाष्टाविंशतिः ॥ मिथ्यादृष्टिपदेनापि २८ ॥ एवं १९६ उद्देशकैरेकचत्वारिंशं शतं समाप्तम् ॥ सर्वस्यां भगवत्यां १३८ शतानि । १९२५ उद्देशकाः । ८४ सहस्रं पादानां ॥ ततो योगविधिः सर्वोपि भगवतीसत्कः ॥

॥ इति श्री भगवतीत्याख्य पञ्चमाङ्गबीजकं समाप्तम् ॥